रूपकमञ्जरी ग्रन्थमाला—७ लीला-मधु-गौरी स्मृतिग्रन्थः ।

# प्रबुद्धहिमाचलम्

नाम

## नाटकम्

पश्चिमवङ्ग-संस्कृतशिक्षापरिषदः प्राक्तन-सदस्येन
पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
ऋषिधाम-कुलपतिना
श्रीविश्वेश्वर विद्याभूषण-काव्यतीर्थ-काव्यरत्नेन
विरचितम्

# PRABUDDHA-HIMĀCALAM

[ SANSKRIT DRAMA ]

By

PANDIT VIŚVEŚVARA VIDYĀBHUṢAṆA KĀVYATĪRTHA




1969

# प्रबुद्धहिमाचलम्

नाम

## नाटकम्

पश्चिमवङ्ग-संस्कृतशिक्षापरिषदः प्राक्तन-सदस्येन
पश्चिमवङ्ग-शिक्षाधिकार-सेवातो विश्रान्तेन प्राध्यापकेन
ऋषिधाम-कुलपतिना
श्रीविश्वेश्वर विद्याभूषण-काव्यतीर्थ-काव्यरत्नेन
विरचितम्

# PRABUDDHA-HIMĀCALAM

[ SANSKRIT DRAMA ]

By
PANDIT VIŚVEŚVARA VIDYĀBHUṢAṆA KĀVYATĪRTHA



1969

कलिकाता-रवीन्द्रभारती-विश्वविद्यालयाध्यापक-श्रीध्यानेशनारायण चक्रवर्ति-
एम्.ए. साहित्यशास्त्रिणा प्रकाशितम् ।
"ऋषि-धाम"
पोः अः—दत्तपुकुर, जिः—२४ परगणा, पश्चिमवङ्ग

| प्राप्तिस्थानम् | To be had of |
|---|---|
| (१) ऋषि-धाम | (1) Rishi-Dham |
| पोः आः दत्तपुकुर, जिः २४ परगणा, | Po. Dattapukur, |
| पश्चिमवङ्ग । | Dt. 24 Parganas |
| | West Bengal. India |
| (२) संस्कृत पुस्तकभाण्डार | (2) Sanskrit Pustak Bhandar |
| ३८ संख्यक विधान सरणि | 38 Bidhan Sarani |
| कलिकाता-६ | Calcutta-6 |

Price-Rupees five only
मूल्यम्—रूप्यकपञ्चकम्

Published by
Prof. Dhyanesh Narayan Chakravarti
Sahitya Sastri, M.A.
(Rabindra Bharati University, Calcutta)
"Rishi-Dham"
P.O. Dattapukur. Dist. 24 Parganas, West Bengal
Printed by
Ramgopal Bandyopadhyaya
Service Printers
55/64 Kalicharan Ghosh Road, Cal-50

1969

श्रीः

# प्राक्कथनम्

## साहित्यस्य भूमिका—

युगस्यालेख्यं साहित्यम्। सत्साहित्यं खलु युगे युगे मानवसमाजस्य उत्थानपतनादिजनितं सुखदुःखमयं नानाद्वन्द्वविचित्रं लोकवृत्तं समालोच्य कल्याणकरं पन्थानं निर्दिशति। यतः "शिवेतरक्षतये" काव्यमिति। किञ्च साहित्यरचनया सार्थकतायुक्तमपरमेकं प्रयोजनं वर्तते। तद्धि आनन्द-रसपिपासूनां मानवानां मर्मसु आनन्दरसपरिवेषणम्। तेन मानवात्मानः परितृप्यन्ति। तदर्थं परमकाम्यस्य आनन्दामृतस्यान्तरायभूतं विश्वशान्ति-विरोधिनं भावविप्लवं, तस्य गतिप्रवाहं परिणतिं च शुभैषणया समुद्घाट्य विश्वेषां शान्तये श्रीलाभाय च निखिलमनुजेभ्यः शाश्वत-मङ्गलवार्तामुद्घोषयति, समनुप्रेरयति प्रोद्दीपयति च मर्त्यचित्तं शुभसाधनेषु। एवं साहित्यकारो विश्वजगतां शान्तिसौख्यलाभाय प्रेमस्निग्धामानन्दमधुरां मिलनभूमिं विरचयति साहित्यमाध्यमेन।

## भारतीयसभ्यता-संस्कृतिः—

आसीच्चिरं भारतवर्षं शान्तिसौख्यज्ञानसमाहितं प्रेम्णा, धर्मेण, त्यागेन, वीर्येण, सम्पदा परमार्थसमुच्चयेन च समृद्धम्। तस्याध्यात्मज्ञानप्रतिष्ठितम् उदारत्वम्, त्यागमधुरं जीवनवृत्तं, भोगेषु अनासक्तिः, सर्वेषु च मैत्री स्वेषां विश्वजनानां च शान्तिसौख्यायाभवन्।

किंच देवयजनभूमिरेतद् भारतवर्षम् ऋषीणां तपसा परिपूतमध्यात्मजीवने सुप्रतिष्ठितम्। अत्र भगवान् महामानवरूपेणावतरति। सत्यस्य धर्मस्य चैतत् साधनक्षेत्रम्। कर्म्म-भक्ति-ज्ञानसमृद्धं सुखशान्तिसमन्वितं चानन्दप्रतिष्ठमत्रत्यानां जीवनव्रतं जगति दुर्लभम्। "ईशावास्यमिदं सर्वम्··· तेन त्यक्तेन भुञ्जीथा" इति भारतीय-मनीषिणां साधनोपलब्धा शिष्यपरम्परानुसृता च

शाश्वती वाणी अस्माननुप्रेरयति शुभसाधनेषु। "शृण्वन्तु विश्वे अमृतस्य पुत्राः", "स्वदेशो भुवनत्रयमिति" भारतीय-तपस्विनां प्रेममैत्रीगर्भा मङ्गलवाणी चिरमत्र विजयते—"सर्वमात्मनि पश्यतीति" महावाक्येन। तेन राजानोऽत्र प्रजारञ्जनपरा लोकपालकाः, न तु भोगासक्ताः; प्रजाश्च धर्मपराः सुखजीविता कल्याणकर्मनिरताः सानुरागा नृपतिषु प्रतिवेशिनां हितं साधयन्ति। अत्र हि तपसा, त्यागेन च परिशुद्धं नृणां जीवनं सत्ये प्रतिष्ठितम्। अतः प्रेम्णा, वीर्येण, तेजसा, नीतिधर्मेण, सम्पद्भिश्च समन्वितानि सुसंबद्धानि राज्यानीह सर्वकलुषमुक्तानि परस्परमैत्रीबन्धनेन विरेजुः। क्षात्रधर्मपालनार्थं दिग्विजय-यात्राप्रसङ्गेनात्र विजेतृ-विजितानामपूर्वं मैत्रीबन्धनं सर्वेषां ससम्मान-स्वाधीनत्व-परिरक्षणेन तेषां सुखसंगतिवार्तां ज्ञापयति। तेनात्र नासीदपरेषामधिकार-हरणार्थं प्रभुत्वप्रयासो निर्विशेषेण लुण्ठनं नरहत्यादिकं वा। दुर्बलेषु बलप्रयोगाः दुर्नीतिः, पीड़नादिकं चेति सर्वमत्र विगर्हितम्। तेन विभिन्न-धर्मविधिष्वपि, सत्स्वपि विभिन्नदेशाचारेषु भिन्नभिन्न-धर्ममतेषु वा अस्त्यत्र सुचिरं द्वन्द्ववैरादि-भाव-विरहितः अपूर्वः-समन्वयभावः।

## भारतवर्षस्य समाजविधिः—

भारतवर्षस्य समाजव्यवस्था च सुदृढ़नीतौ प्रतिष्ठिता। वर्णाश्रमविधा-नेन धर्मकर्माचाराविरोधेन सर्वेषां श्रमसमन्वय-समृद्धां समाजप्रतिष्ठां विधाय संरक्ष्य च तां वैज्ञानिकनीतिबलेन, ब्राह्मण्यशक्तिपरिपोषिता सर्वकल्याणमयी क्षात्रशक्तिरत्र सर्वजनपालनी सर्वेषां हितसाधनपरा सामाजिकानां शान्तिसौख्य-समृद्धिविधानेन विजयते स्म। अत्र आदानप्रदानैश्चतुर्वर्णानां परस्परपरि-पोषण-संरक्षण-समृद्धिसंसाधननियमैः सर्वेषां सुगठिता श्रम-कर्म-समन्वय-नीति-स्त्यागेन प्रेम्णा सौख्येन च सर्वान् परिरक्षति, साधयति च समुन्नतिं स्वस्व-जीवनवृत्तीनामविरोधेन। तेनात्र सामाजिकानामुत्तराधिकारक्रमेण परस्परेषां कौलिकवृत्तिर्निर्विरोधेन सुदृढा सुसमृद्धा च क्रमोन्नतिं सम्प्राप सर्वेषां सौख्याय समृद्धये च।

## भारतीया अर्थनीतिः—धनानां सुष्ठुप्रयोगः—

किं चैतद्देशे अतिसञ्चयो हि चिरं प्रतिषिद्धः सर्वथा गर्हितश्च। अत्र च धर्मशास्त्राणां वाणी—

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥ इति।

तेन हि पण्यजीविनां वैश्यवणिजां वात्र नासीद् दुर्मदो धनलोभः, असाधुता, अतिसञ्चयप्रचेष्टा वा। ततश्च राज्ञां, धनिनां, गृहिणां च स्वस्व-सामर्थ्यानुसारेण देवपूजा-व्रतपावण-पितृश्राद्धादेरनुष्ठानं नित्यकर्तव्यत्वमर्हति। तत्प्रसङ्गेन च दानधर्माचरण-जलाशयकूपोत्सर्गेष्टपूर्तादिना सेतु-मन्दिर-प्रतिष्ठा-ब्रह्मोत्तर देवोत्तर-भूदानादि-सत्कर्मभिश्च धनानां सुष्ठुवण्टननीतिः सार्थकत्वमापादिता।

## भारतसंस्कृतेरमरत्वम्—

पुनः पुन विलुण्ठित-धनरत्नादिके सुचिरं पराधीनता-निगड़-प्रपीड़ितेऽपि भारतवर्षे इमां संस्कृतिं न केऽपि वैदेशिकाः पराजेतुं प्रणाशयितुं वा शेकुः। यतः अमृतमयी भारतसंस्कृतिः प्राणरसप्राचुर्येण सुधामयी सुरतरंगिणीव सुचिरमात्मानं रक्षति। सा हि मन्दिराभ्यन्तरविलसिता मङ्गलमयी सन्ध्यादीपशिखेव अन्तर्दीप्यमाना आप्रलयं सनातनभारतवर्षमरक्षत्, रक्षिष्यति च स्वकीय-शाश्वतमहिम्ना एतद्देशवासिनो गौरवेण।

## भारतवर्षस्य राजनीतिः—

भारतवर्षस्य सौष्ठवयुक्ता सत्यसिद्धा राजनीतिः स्वकीयां शुभसंस्कृतिमनुसृत्य प्रावर्त्तत। "मा गृधः कस्यस्विद् धनमिति" उपनिषद्वचनं तस्या मूलम्। तेन भारतीयनरपाला धर्मेण, प्रेम्णा, वीर्येण, सुनयेन च राज्यमपालयन्। तस्मादत्र न कदाचित् अदृश्यत विप्लवः प्रजाभ्युत्थानं गण-विद्रोहो वा। बहिर्विश्वेषु विलसितं राज्यसम्प्रसारणप्रचेष्टादिकं, प्रभुत्वविस्तारार्थमन्याययुद्धायोजनं, परराज्यग्रसनार्थं सामरिकी निष्ठुरता, छलना, मारणास्त्रप्रयोगेण जनपदानां ध्वंससाधनं, निर्विशेषेण नरहत्यादिकं धर्मान्तरीकरण-नारीनिग्रहादिकानि चेति

शाश्वती वाणी अस्माननुप्रेरयति शुभसाधनेषु। "शृण्वन्तु विश्वे अमृतस्य पुत्राः", "स्वदेशो भुवनत्रयमिति" भारतीय-तपस्विनां प्रेममैत्रीगर्भा मङ्गलवाणी चिरमत्र विजयते—"सर्वमात्मनि पश्यतीति" महावाक्येन। तेन राजानोऽत्र प्रजारञ्जनपरा लोकपालकाः, न तु भोगासक्ताः; प्रजाश्च धर्मपराः सुखजीविता कल्याणकर्मनिरताः सानुरागा नृपतिषु प्रतिवेशिनां हितं साधयन्ति। अत्र हि तपसा, त्यागेन च परिशुद्धं नृणां जीवनं सत्ये प्रतिष्ठितम्। अतः प्रेम्णा, वीर्येण, तेजसा, नीतिधर्मेण, सम्पद्भिश्च समन्वितानि सुसंबद्धानि राज्यानीह सर्वकलुषमुक्तानि परस्परमैत्रीबन्धनेन विरेजुः। क्षात्रधर्मपालनार्थं दिग्विजय-यात्राप्रसङ्गेनात्र विजेतृ-विजितानामपूर्वं मैत्रीबन्धनं सर्वेषां ससम्मान-स्वाधीनत्व-परिरक्षणेन तेषां सुखसंगतिवार्तां ज्ञापयति। तेनात्र नासीदपरेषामधिकार-हरणार्थं प्रभुत्वप्रयासो निर्विशेषेण लुण्ठनं नरहत्यादिकं वा। दुर्बलेषु बलप्रयोगाः दुर्नीतिः, पीड़नादिकं चेति सर्वमत्र विगर्हितम्। तेन विभिन्न-धर्मविधिष्वपि, सत्स्वपि विभिन्नदेशाचारेषु भिन्नभिन्न-धर्ममतेषु वा अस्त्यत्र सुचिरं द्वन्द्ववैरादि-भाव-विरहितः अपूर्वः-समन्वयभावः।

## भारतवर्षस्य समाजविधिः—

भारतवर्षस्य समाजव्यवस्था च सुदृढ़नीतौ प्रतिष्ठिता। वर्णाश्रमविधानेन धर्मकर्माचाराविरोधन सर्वेषां श्रमसमन्वय-समृद्धां समाजप्रतिष्ठां विधाय संरक्ष्य च तां वैज्ञानिकनीतिबलेन, ब्राह्मण्यशक्तिपरिपोषिता सर्वकल्याणमयी क्षात्रशक्तिरत्र सर्वजनपालनी सर्वेषां हितसाधनपरा सामाजिकानां शान्तिसौख्य-समृद्धिविधानेन विजयते स्म। अत्र आदानप्रदानैश्चतुर्वर्णानां परस्परपरि-पोषण-संरक्षण-समृद्धिसंसाधननियमैः सर्वेषां सुगठिता श्रम-कर्म-समन्वय-नीति-स्त्यागेन प्रेम्णा सौख्येन च सर्वान् परिरक्षति, साधयति च समुन्नतिं स्वस्व-जीवनवृत्तीनामविरोधेन। तेनात्र सामाजिकानामुत्तराधिकारक्रमेण परस्परेषां कौलिकवृत्तिर्निविरोधेन सुदृढा सुसमृद्धा च क्रमोन्नतिं सम्प्राप सर्वेषां सौख्याय समृद्धये च।

## भारतीया अर्थनीतिः—धनानां सुष्ठुप्रयोगः—

किं चैतद्देशे अतिसञ्चयो हि चिरं प्रतिषिद्धः सर्वथा गर्हितश्च। अत्र च धर्मशास्त्राणां वाणी—

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ इति ।

तेन हि पण्यजीविनां वैश्यवणिजां वात्र नासीद् दुर्मदो धनलोभः, असाधुता, अतिसञ्चयप्रचेष्टा वा। ततश्च राज्ञां, धनिनां, गृहिणां च स्वस्व-सामर्थ्यानुसारेण देवपूजा-व्रतपावण-पितृश्राद्धादेरनुष्ठानं नित्यकर्तव्यत्वमर्हति। तत्प्रसङ्गेन च दानधर्माचरण-जलाशयकूपोत्सर्गेष्टपूर्तादिना सेतु-मन्दिर-प्रतिष्ठा-ब्रह्मोत्तर देवोत्तर-भूदानादि-सत्कर्मभिश्च धनानां सुष्ठुवण्टननीतिः सार्थकत्वमापादिता।

## भारतसंस्कृतेरमरत्वम्—

पुनः पुन विलुण्ठित-धनरत्नादिके सुचिरं पराधीनता-निगड़-प्रपीड़ितेऽपि भारतवर्षे इमां संस्कृतिं न केऽपि वैदेशिकाः पराजेतुं प्रणाशयितुं वा शेकुः। यतः अमृतमयी भारतसंस्कृतिः प्राणरसप्राचुर्येण सुधामयी सुरतरंगिणीव सुचिरमात्मानं रक्षति। सा हि मन्दिराभ्यन्तरविलसिता मङ्गलमयी सन्ध्यादीपशिखेव अन्तर्दीप्यमाना आप्रलयं सनातनभारतवर्षमरक्षत्, रक्षिष्यति च स्वकीय-शाश्वतमहिम्ना एतद्देशवासिनो गौरवेण।

## भारतवर्षस्य राजनीतिः—

भारतवर्षस्य सौष्ठवयुक्ता सत्यसिद्धा राजनीतिः स्वकीयां शुभसंस्कृतिमनुसृत्य प्रावर्त्तत। "मा गृधः कस्यस्विद् धनमिति" उपनिषद्वचनं तस्या मूलम्। तेन भारतीयनरपाला धर्मेण, प्रेम्णा, वीर्येण, सुनयेन च राज्यमपालयन्। तस्मादत्र न कदाचित् अदृश्यत विप्लवः प्रजाभ्युत्थानं गण-विद्रोहो वा। बहिर्विश्वेषु विलसितं राज्यसम्प्रसारणप्रचेष्टादिकं, प्रभुत्वविस्तारार्थमन्याययुद्धायोजनं, परराज्यग्रसनार्थं सामरिकी निष्ठुरता, छलना, मारणास्त्रप्रयोगेण जनपदानां ध्वंससाधनं, निर्विशेषेण नरहत्यादिकं धर्मान्तरीकरण-नारीनिग्रहादिकानि चेति

भारतीयराजनीतेर्बहिर्भूतानि। एतेभ्यः कलङ्कमालिन्येभ्यश्चिरमुक्ता एषा भारतीया राजनीतिः सुचिरम् अम्लानमहिम्ना विजयते।

किञ्चास्माकं राजनीति धर्मे प्रतिष्ठिता, नहि वीर्यहीना। सुमहत्या वीर्यसम्पदैषा समलंकृता सुदृढ़ा च। अतः सा सर्वविधं क्लैब्यमरातिषु चात्मसमर्पणात्मिकां नतिं वा नोपदिशति। "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीमिति" श्रीमद्भगवद्गीतोक्ति स्तामेव समर्थयति, अन्याय-प्रतिरोधार्थं धर्मयुद्धं प्रशंसति नतु कदापि परराज्यग्रास प्रचेष्टनम्। परराज्य-प्रलुब्धानां वैदेशिकानां दुर्नीतिपरायण-मदमत्त-शत्रूणामन्यायाक्रामणप्रतिरोधार्थं शस्त्रशरणं तथा धर्मस्य कृते प्रजानां जीवनरक्षणाय च युद्धमिति अस्मन्नीति-शास्त्राणामुपदेशः।

किंच न्याय्ययुद्धमन्तरेण निर्विशेषम् असामरिकाणां जनानां विनाशसाधन-मस्माकं राजनीतेर्वहिर्भतम्। परधर्मविद्वेषाः किं वा अपरेषां राज्यग्रसनाय एता वैदेशिकैरनुसृता अनार्यनीतयो भारतवर्षे कदापि न दृश्यन्ते। क्षात्रधर्मोऽत्र सत्ये प्रतिष्ठितो वीर्यं प्रकाशयति सत्यस्य रक्षणाय, जनानां त्राणाय न तु पर-पीड़नाय। सहि सर्वथा कैतवं हिंसादिकंच परिहरति। प्रजापालनमेव राजधर्म इत्येव भारतीया राजनीतिः सर्वपापमुक्ता चिरप्रसिद्धिमाप्नोति। अन्त-र्वहिश्च सर्वराज्यैः सर्वसम्प्रदायैः सार्द्धमविरोधेन स्वकीयराष्ट्रसंरक्षणं तथा तैः सह मैत्रीविधानमिति भारतीया राजनीतिश्चिरं स्वकीयौदार्यमहिम्ना विजयते।

## सभ्यतायाः सङ्कटम्—

आधुनिकी सभ्यता तस्या विद्याबुद्धि-शिल्प-विज्ञानादिषु शुभशुभा-विष्कारप्रवर्त्तनीं मनुष्यत्वसमुत्कर्ष-विधायिनीं पूर्वतनीं कल्याणनीतिं विसृज्य कूटबुद्धिप्रभावेण दुर्दमलालसा-मदमत्ततायुक्ता राजनैतिक-प्रभुत्वप्रतिष्ठा-शया देशे देशे समरानलं प्रज्वाल्य विश्वस्य ध्वंसभूमिं विरचयति। तेन विभिन्नदेशानां जातीनां च मध्ये प्रवर्तन्ते परस्पराविश्वासाः, हिंसावैरप्रयुक्ताश्छलनापरा दुर्नीति-प्रतियोगिताः मारणास्त्रप्रस्तुतयश्च। अनेन मानवानां मैत्री, शान्तिसुखानि च विलयं गच्छन्ति, विलुप्तिं गच्छन्ति च नराणां शुभबुद्धयः क्रमेण। एषा प्रमत्ता विजातीया

दुर्जिगीषा सुसज्जितवेशा मनोमोहिनी विषकन्येव विषमुद्गीरति दशति च शान्तशिष्ट-जनसमाजं करालदशनेन। विश्वसभ्यताया आसन्नसंकटमुहूर्ते एतत्प्रलयसिन्धुसमुत्थितं हलाहलं निपीय को हि वीरो विश्वभुवं रक्षिष्यति ? यदि सभ्यता सर्वध्वंसाय प्रवर्तते, तदा किं हतशेषाः मानवगोष्ठयः प्रभुभूता भूमण्डले जनानां श्मशानभूमिं विरच्य आदिमकालीन-वनचरवृत्तिमवलम्बमाना हिंस्रै र्वनचरैः सार्द्धं पुरातनम् आरण्यवासमवलम्बिष्यन्ते ? यदि प्रभुत्वेप्सया राज्यप्रसारणार्थम् ईदृशः समरानलः प्रज्वलति अथवा साम्प्रदायिक-भेदबुद्धि-प्रभावात् संकीर्ण-धर्मान्धतया स्वधर्मीयेतराणामुत्सादनार्थं तेनैव विश्वेषु प्रभुत्व-संस्थापनार्थं च केवलं समराभियानं प्रसरति, तदा बहुजनमारणं विधाय नगर-नगरी-सौध-जनपदान् ध्वंसीकृत्य मानवानां सकलां नीतिधर्म-प्रेम-ज्ञान-विज्ञान-शिल्पसमुत्कर्ष-सम्भावनां प्रलयानले निक्षिप्य हतशेषमानवगोष्ठीषु प्रभुत्व-विलासो नरान् कां शान्तिसौख्य-सार्थकतां माहात्म्यं वा प्रापयिष्यति ? तत्र किं वा गौरवम् ?

परमेषा दुष्टा बुद्धिः श्रुतिमनोरमान् अनार्यजनसुलभान् भ्रान्तिवादान् प्रचार्य महानर्थं सम्भावयति। एभ्यो महानर्थेभ्यः परित्राणपथो व्याघ्रचर्मा-सनै र्महाध्यानपरै र्भारतीयमहर्षिभिः कृच्छ्रतपसा शुभधियाविष्कृतः। तेषां वाणी भारतसंस्कृतिरूपेण चिरं विलसति। वहिर्विश्वेषु समन्ततो विलसत्स्वपि अशुभंकर-महाताण्डवेषु महाकालविजयिनी एषा शुभसंस्कृति र्जाग्रती विश्वेषां मानवानां कल्याणाय तपस्यति। अथत्वे समन्ततः समुद्भूतानि सर्वाण्य-शुभानि, परस्परद्वन्द्वरतानां हिंसोन्मत्तजनानां दुर्विलासोद्भवानि सर्वाणि हलाहलानि निःशेषं प्रपिवति भारतात्मा निखिलजनानां कल्याणाय। स हि नीलकण्ठ इव नराणां रक्षार्थं प्रचेष्टते। सम्प्रदायविशेषाणां संकीर्ण-कूटधर्मबुद्धि-प्रसूतेन साम्प्रदायिकता-कालुष्येण खण्डच्छिन्नमपि भारतवर्षं दुर्वहक्लेशभारेण प्रपीड़ितमपि मानवधर्मरक्षार्थं महता त्यागेन प्रकरोति कृच्छ्रसाधनमात्मनः शुभसंस्कृति-व्रतवलेन।

## आधुनिकभारतवर्षम्—

कृच्छ्रतपसा भूयसात्मत्यागेन भारतवासिभिः स्वाधिकारः सम्प्राप्तः।

पराधीनताबन्धनं समुच्छिद्य स्वाधीनतालाभार्थं भारतसन्तानैश्चरमं मूल्यं प्रदत्तम्। प्राक् विधर्म्मिणां मदमत्त-प्रचण्डाक्रमणैस्तेषां धर्मान्धता-ताण्डवैश्चापि भारतीया संस्कृतिस्तस्या आध्यात्मिकवलेन जीवति। किन्तु स हि विजय-महिमाधुना अस्माकमनादरत्वाद् वैदेशिकभोगवादानुकरणाच्च खर्वतां गच्छति। परस्पर-द्वन्द्वरतानां विभ्रान्त-राजनैतिकगोष्ठीनां स्वधर्म्मविच्युतिरेव अस्य कारणम्। एताः सर्वानर्थकरा विपर्ययाः सर्वथा परिहर्तव्या, सन्त्याज्याश्च आत्मनाशकरा भ्रान्तनीतयो देशवासिनां कल्याणाय, मङ्गलाय च विश्वजनानाम्। तेनाद्यास्माकं रक्षामन्त्रोऽस्तु—"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"ति।

## निस्तारोपायः—संस्कृतिः

संस्कृतिरात्मसंस्मृतेरेव नामान्तरम्। सा संस्कृतिरेव जातीय-जीवन-सत्ताया मूलम् प्राणशक्तिश्च। एषा हि मानवजातीनां जीवनशतदलस्य अक्षय-वृन्त-वन्धनम्। इमां संस्कृतिं तथा आत्मचेतनां विहाय न कोऽपि जीवति, न वा भारतवर्षम्। यतः समुन्नता शुद्धा संस्कृतिरेव मानवानां जीवनं प्राणरसेन परिपोष्य तांस्तेजोमयानक्षयांश्च प्रकरोति। भारतवर्षस्य जीवनमूले इयं धर्मसुप्रतिष्ठिता ज्ञानसमुज्ज्वला अध्यात्मप्रेम-तपो-भास्वरा संस्कृतिरेव चिरं तिष्ठति। तामिमां प्राणशक्तिं निकृत्य वहवोऽन्ये मानववंशीया भूतलाद् विलुप्तिं गताः। इतिहास एवास्य प्रमाणम्।

किंच, केवलं वाहुवलेन, शस्त्रसम्पदा अथवा कूटराजनीतिनैपुण्येन, पराक्रमेण वा न केऽपि शक्तिशालिनः श्रियं लभन्ते। पृथिव्यां वहुजातीनामुत्थान-पतनं वहुराजवंशीयानां नरपतीनां च उदयविलयादिकम् इतिहासे प्रमाणसिद्धम्। यतः संस्कृतिविलोपेन जातीयजीवनं क्षयमापद्यते। भवति च तेनात्मविनाशः। प्राणशक्तिमुत्कृत्य कथं प्राणी सञ्जीविष्यति? हृत्पिण्डमुत्पाट्य किं कोऽपि जीवितुं शक्नोति? अथवा विच्छिन्न-शिरोग्रीवा देहवल्ली कथं प्राणान् धारयिष्यति? अतश्चिरकल्याणविधायिनीं स्वकीयाम् अध्यात्मसंहतिभूतामात्मशक्तिं समुन्मूल्य कथं भारतवर्षं सर्वनाशकरीं कलङ्कमलिनां निःस्वतां वरिष्यति? एष घृण्य आत्मविनाशो न

कदापि वरणीयः। अतः सर्वथा सन्त्यजनीया हि नितरां वैदेशिक-भोग-विलासानुचिकीर्षा चिराय।

वीरभूमिः खलु भारतवर्षम्। भारतवर्षस्य वीर्यवत्ता धर्मे प्रतिष्ठिता। सा हि महत्या अध्यात्मसम्पदा संनद्धा सुदृढ़ा च। भारतवर्षीयानां जीवने योगेन सार्द्धं कर्मणः समन्वयः। समुन्नता धर्मनीति स्तन्नियन्त्रयति। इयं हि देवभूमि दैवत्वमाराधयति। भारतवर्षस्य वीर्यमयी आध्यात्मिकी शक्तिरेव तस्य संस्कृतिममृतां करोति। सा च अत्रत्यानां गौरवमयीमात्मचेतनां समुद्दीप्य, संरक्ष्य च जनानां संहतिं, संगतिं साधयति।

किं चात्र नराणां जीवनयात्रायां त्यागेनैव भोगस्य सार्थकत्वम्। संयमेन च तस्यान्वयः। महत्यां वीर्यवत्तायामस्य प्रतिष्ठा। दुराचारेषु अरातिषु विश्वासः, शत्रूणां तोषणं, स्वधर्मपालने स्वाधिकाररक्षणे चोपेक्षणं, किंवा वैरिषु नतिरित्यादि सर्वं क्लैव्यमत्र नीतिशास्त्रै निषिद्धम्। "नायमात्मा बलहीनेन लभ्यः," 'नहि वीर्यहीनेन लभ्यो धर्म' इत्यस्मद्धर्मशास्त्राणां निर्घोषः। अतः "अमृतस्य पुत्रा" स्तपसा अमृतमाहृत्य संरक्षेयुस्तत् प्रयत्नेन, वीर्य्येणेति—भवतु चैतद् अस्माकं जीवनव्रतम्। तेन भारतसन्तानाः सर्वां परानुकारितां द्वन्द्वं, क्लैव्यं, भ्रान्तिं च निरस्य प्रेम्णा धर्मेण सुसंहता आत्मनः संरक्षन्तु विपर्ययेभ्यः संलभन्तां च विजयश्रियमानन्देन। स्मरणीयात्र श्रीभगवद्वाणी—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूति र्ध्रुवा नीति र्मतिर्मम॥ इति।

अतः प्रेमधर्मसिद्धाः सत्ये प्रतिष्ठिता वयमद्य शुभानि आचराम यथास्मदुत्तरपुरुषा भाविकालेषु अस्माकं पुण्याचरितानि श्रोतुकामा त्रिकालज्ञं-महर्षिं प्रक्ष्यन्ति—

पितॄणां महिमाख्यानं श्रुतं मुदा तपोनिधे।
अतःपरं च कथ्यन्तां तेषां कीर्तिकथाः शुभाः॥ इति

## प्रकाशनम्

अर्थहीनस्य साहित्यविरचनं तत्प्रकाशनचेष्टनं वा सर्वं विड़म्बन-मेव। एतद्धि सत्यं जराजीर्णे गतिशक्तिरहितप्राये च निष्किञ्चने मयि सत्यतां

गच्छति। तथापि भगवत्प्रसादाद् रवीन्द्रभारतीविश्वविद्यालयाध्यापकस्य मदात्मजस्य श्रीमद् ध्यानेशनारायण चक्रवर्त्ति-साहित्यशास्त्रिण ऐकान्तिक-प्रचेष्टयैव एतद् महाव्रतमुद्याप्यते। पण्डितकुलतिलकानां विश्वविद्यालया-ध्यापकानां श्रीयुक्त श्रीजीवन्यायतीर्थ एम्.ए महोदयानां तथा महामहोपाध्याय श्रीकालीपदतर्काचार्याणां, सीतारामवेदविद्यालयाध्यक्ष-श्रीरामरञ्जन काव्य-व्याकरणतीर्थानां च सानुरागं प्रोत्साहनमेव मामत्र कर्मणि प्रवर्तयति। एतेभ्यः पुण्यचरितेभ्यः सश्रद्धकृतज्ञतां विज्ञापयामि। तेषां शुभाशंसनं चिरं विजयताम्। किंच एषां ग्रन्थानां विरचने स्वर्गत-सन्तानानां विच्छेदो मां विह्वलयति। तेन तेषां पुण्यस्मृतौ ग्रन्थोऽयं प्रकाश्यते।

पुनश्चात्र ग्रन्थे बहवो मुद्रणप्रमादाः साम्प्रतं परिदृश्यन्ते। मम निरन्तर-रोगशय्याशायित्वं मुद्रणालयस्य च बहुदूरावस्थितत्वं चास्य प्रधानकारणम्। अतःपरं शुद्धिपत्रसंयोजनकामः सुधियां सकाशे त्रुटिमार्जनां प्रार्थये।

## श्रद्धानिवेदनम्

मम देवभाषा-सम्प्रचार व्रतेषु, भुवनमङ्गलविग्रहाणां नामप्रेमावतार-श्रीमद् ओङ्कारनाथ सीतारामदासपादानां निरन्तर-शुभाशीःप्रेरणा मामुद्दीपयति। तस्मै सश्रद्धप्रणतिं निवेदयामि। तथा चात्रकर्मणि ज्ञान-प्रेमावदातानां वाराणसेय-संस्कृत विश्वविद्यालयकुलपतीनां डः श्रीगौरीनाथ शास्त्रि एम्-ए पि-आर-एस्,डि, लिट् महोदयानां सानुराग-शुभैषणया तस्मै श्रद्धां ज्ञापयामि।

**प्रयोगः—**

एतन्नाटकानां सुष्ठु प्रयोगविधौ हुगलींसंस्कृतपरिषत्-सम्पादकानां विद्या-कीर्ति-प्रेमनिलयानां श्रीकाशीनाथ विद्यानिधि काव्यतीर्थ-भट्टाचार्य्याणां तथा हुगली-संस्कृतपरिषत्-सदस्यानामध्यापक-श्रीसुनीलेन्दु भट्टाचार्य्य एम्-ए, बि, टि प्रमुखाणां, हुगलीनिवासिनां मदीय-प्राक्तनच्छात्र-च्छात्रीमण्डलानां चैकान्तिकी सानुरागा प्रचेष्टा सुचिरं स्मरणीया समभिनन्दनीया च। एतेषां निरन्तर-मभ्युदयं श्रेयांसि च कामये। संस्कृतभाषाया महिमप्रचारे मम साहचर्यशुभेच्छा-विधानेषु च हुगली संस्कृतपरिषदः प्राक्तनमुख्यनायकम् अध्यापकं श्रीमदमियनाथ चक्रवर्त्ति-काव्यतीर्थ एम, ए महोदयं श्रद्धया स्मरामि।

किञ्च नानास्थानीय श्रोतृवर्गाणामाग्रहात् कलिकाता-आकाशवाणी-प्रतिष्ठानै-रेतन्नाटकं बहुशः प्रचारितम्। अतस्तेभ्यः कृतज्ञतां ज्ञापयामि।

## उपसंहारः—

मदीयं सारस्वतजीवनम् अध्यापनाप्रसङ्गेन प्राक्तन-च्छात्रच्छात्रीणां निरन्तर-साहचर्यमधुर-पुण्यावदानेन सुरभीकृतम्। तेषां सुविमल-स्नेहश्रद्धासुधया निषिक्तोऽहम् एतद्ग्रन्थं वर्तमान-भाविकालीन-सारस्वतानामुद्देशतः उपहरामि। अध्यात्मतपःसिद्धं ज्ञानप्रेम-वीर्य-सुसमृद्धं च सुखशान्तिपुण्यनिलयं महाभारतवर्षं विरच्य ते धन्या भवन्तु।

ॐतेजोऽसि तेजो मयि धेहि, वीर्यमसि वीर्यं मयि धेहि। ॐशम्।

"ऋषिधाम"
दत्तपुकुर
श्रीपञ्चमी
१३७५ वङ्गाब्दाः

निवेदनमिति—
श्रीविश्वेश्वर विद्याभूषणकाव्यतीर्थस्य।

## सारस्वतसाधना—स्वरचित-ग्रन्थमाला

### ( Works by the author )

| | |
|---|---|
| दस्युरत्नाकरम्— | संस्कृतदृश्यकाव्यम् |
| भरतमेलनम्— | ,, |
| वाल्मीकिसंवर्द्धनम्— | ,, |
| चाणक्यविजयम्— | ,, |
| प्रबुद्धहिमाचलम्— | ,, |
| उत्तर-कुरुक्षेत्रम्— | ,, |
| मातृपूजनम्— | ,, |
| काशीकोशलेशम्— | ,, |
| विष्णुमाया— | ,, |
| ओङ्कारनाथमङ्गलम् | ,, |
| द्वारावती— | ,, |
| उमातपस्विनी— | ,, |
| वनवेणुः | —संस्कृतगीतिकाव्यम् |
| गङ्गासुरतरङ्गिणी | —काव्यम् |
| काव्य-कुसुमाञ्जलिः | —खण्ड-काव्यम् |
| मणिमालिका | —संस्कृत कथासाहित्यम् |
| पद्मराग | —वङ्गभाषानिवद्धः कवितासम्भारः |
| मानसी | —वङ्गभाषानिवद्ध-प्रवन्धसमुच्चयः |
| Message of the Divine Mother | —आंगलभाषानिवद्ध-प्रवन्धसमुच्चयः |

श्रीः

## समर्पणम्

भारतसंस्कृते धारकवाहकानां

तथा

ज्ञान-तपो-वीर्य-प्रेमसमृद्ध-सुखशान्ति-पुण्यमय-

विशालमहाभारतवर्ष-रचनाव्रतानां

स्वदेशीय सारस्वतानां सुचरितानां विद्यार्थिनीनां

करकमलेषु च

सादरं समुपहृतमेतत्—

सुचिरशुभकामिना

१३७५ वङ्गाब्दीय श्रीपञ्चमीदिवसीयम् } श्रीविश्वेश्वर विद्याभूषण देवशर्मणा ।

( पश्चिमवङ्ग-शिक्षाधिकारसेवातोऽवसरग्रहणोपलक्ष्ये )

प्रधानसंस्कृताध्यापक—

श्रीविशेश्वर विद्याभूषण काव्यतीर्थं काव्यरत्न महोदयस्य

## सम्वर्द्धनम्

भो भोः सभ्यजना, अयं सुविदितः सद्ब्राह्मणो धार्मिको
नित्याध्यापन-पूजनादि-निरतो वेदार्थवित् तत्त्वविद् ।
सम्मानं यदि दीयतेऽद्य वत तत् किं नूतनत्वं व्रजे-
दित्येवं न हि शक्यते गणयितुं केनास्य संवन्दनम् ॥१॥
वैचित्र्यं तव चित्रकाव्यरचने वैदग्ध्यमक्लेशतो
नाना भावमयी कथा विकथने हास्यं सदास्ये च ते ।
वेदान्तेषु निगूढ़तत्त्वविषये कास्माकमासीत् कथा
काप्येवं स्मितपूर्णभाषि सुजनस्यालाप आकर्णितः ! ॥२॥
हीनं तत् परसेवनं वहुविधक्लेशापमानास्पदं
यच्चूर्णीकुरुतेऽत्र धर्ममपि सद्भावञ्च सत्याश्रयम् ।
त्यक्त्वा तच्चिरमेव मोहमदिरा-लोभास्पदं सन्ततं
विश्रामं लभतेऽद्य शान्तसुजनः स्वाधीनतामाश्रितः ॥३॥
अमन्दं वात्याकम्पित-दलित-विभ्रान्त-कमलाद्
बलाद्दूरे नीतं यदि भवति पद्मान्तरमपि ।
चिरस्नेह-प्रेमोत्कलन-ललिते वै सुविहिते
न तत्र स्याद्दोषः कतर-कमलस्यापि सुजनः ॥४॥
सुस्थो जीव सुपण्डित ! प्रतिदिनं स्वेष्टञ्च ते वर्द्धतां
याहीतोऽपि तथा विलीनमनसा विष्णोः पदं संस्मरन् ।
आयाहि स्वयमत्र सर्वसमये विद्यालये स्वेच्छया
काम्यं ते शुभयाचनं विभुपदे, शम्भुः स संप्रीयताम् ॥५॥

निवेदनमिति—

हूगलीनगरतः—
१८८१ शकाब्दीय
सोर ज्यैष्ठस्य तृतीय
दिवसीयम् ।

गुणमुग्ध-साध्यापकच्छात्राणाम् ।
भट्टपल्लीवास्तव्याध्यापक—
श्रीविश्वनाथ काव्यव्याकरण-
न्यायतीर्थेन विरचितम् ।

## शुभाशंसनम्

श्रीः

पश्चिमवङ्ग-संस्कृतमहासम्मेलनपक्षतः

*कविवर श्रीविश्वेश्वर विद्याभूषण काव्यतीर्थ*

महोदयानां संवर्द्धनम् ।

लब्ध्वा जन्म शुभद्विजान्वयमहासिन्धौर्य इन्दूपमः
स्निग्धः सुन्दरभास्वराकृतिधरः शान्तस्वभावः स्वतः ।
विद्याकान्तिकिरश्चिराय रचयन्नन्ते वसन्मानसम् ॥
स्वच्छं भावविशारदं स जयताद् विश्वेश्वरो भूसुरः ॥१॥

विद्याभूषण-काव्यतीर्थपदभाग् विश्वेश्वरः साधकः ।
श्रीसारस्वतमन्दिरस्य सरसस्येन्दीवरश्रीमतः ।
नाना-नाटक-काव्य-कोमलकला-मालाभिरभ्यर्चयन् ।
देवीं वाचमसौ विराजति सतामानन्दसन्दीपनः ॥२॥

ललितपदमृणालालम्बिता पद्यमाला
निजकरकलिता या पद्ममालाभिरामा ।
लसति सुरगिरायाः कण्ठहारायमाना
दिशतु सुरभिभारं सैव विश्वेश्वराय ॥३॥

अद्यानन्दभरेण संस्कृत-महासम्मेलनं भास्वरं
श्रीविश्वेश्वरसंज्ञकं कविवरं संवर्द्धयद् भ्राजते ।
श्रीमान् मानवसङ्घमङ्गलकरं ग्रन्थोच्चयं कल्पय-
न्नायुः पूर्णमवाप्य भारतधराधाराधुरामावहेत् ॥४॥

षोड़शवार्षिकमहासम्मेलने
हुगली नगरतः
१३७४ वङ्गाब्दीय
सौर चैत्रस्य दशमदिवसीयम् ।

परिषत्पक्षतो विरचितं
श्री श्रीजीवन्यायतीर्थेन ।

## कुशीलवाः—

### पुरुषाः—

सूत्रधारः
विजयकेतुः—देवस्थानाधिपतिः
अमात्यः
पुरञ्जयः—सेनापतिः
सनातनः—देशप्रेमी साधकः
दार्शनिकः
विश्वचित्रः—शिल्पकारः
सुधाकण्ठः—राजकविः
दौवारिकः, देवस्थानसैनिकाः
अनुचरः, पार्षदाः
नागरिकाः, वास्तुहीनाः—३
सन्तानसङ्घीयाः, देशसेवकाः
ब्रह्मानन्दभारती—वेदभारती-मन्दिराध्यक्षः।
शरणार्थिनः, प्रसाधनविक्रेता
चित्रभानुः—गन्धर्वराजः
तत्पुरोहितः, सैनिकाः, पार्षदाः
विक्रमवर्धनः—विशालपुराधिपतिः
प्ररोचनः—मन्त्री
विनोदः—वयस्यः
चण्डशासनः—सेनाध्यक्षः
दस्युपतिः, दस्यवः
परिव्राजकाः
नागरिकौ

### स्त्रियः—

नटी
चित्रलेखा—गन्धर्वराजपत्नी
मधुच्छन्दा—तत्कन्या, पश्चाद् देवस्थानराज्ञी
कलस्वना—सखी
मधुपर्णा—,,
रत्नमञ्जरी—चारणी
देशकन्याः
पुरबालिकाः
मदन्तिका—नर्तकी
रत्नमाला ,,
तृष्णा ,,
मोहमयी ,,
वह्निशिखा ,,



ग्रन्थकारः

पण्डितप्रवर श्रीविश्वेश्वर विद्याभूषण काव्यतीर्थ काव्यरत्न

# प्रबुद्धहिमाचलम् ❋

## नाम

## नाटकम्

श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम्

शरदिन्दुसुन्दरमुखीमुद्यदरुणाङ्ग-कनकपद्मच्छटाम् ।
गौरीं हरमनोहरां वन्दे वरदां जगदम्बिकाम् ॥

### प्रस्तावना

### नान्दी

उद्यत्स्वर्णकरोज्ज्वलाद्रिमुकुटां नीलाब्धिनीराञ्चलां
श्यामां काननकुन्तलां च ललितां पुण्यप्रभाशीतलाम् ।
काशी-वङ्ग-कलिङ्ग मद्रसहितां सौराष्ट्ररम्यस्थलां
वन्दे भारतमातृकां सुवरदां गङ्गासरिन्मालिनीम् ॥

( नान्द्यन्ते सूत्रधारः प्रविशति । )

सूत्रधारः । अहो, आदिष्टोऽस्मि किलाद्य भगवत उमामहेश्वरस्य यात्रा-प्रसङ्गेन सामाजिकानां चित्तविनोदनार्थमभिनवकलाकौशल-समलङ्कृतं सुललितसंस्कृतनाटकं प्रयोजयितुं सह परिजनेन । अतोऽहं भगवन्तमुमामहेश्वरं प्रणम्य गुणग्राहिरसिकजनानामनु-रागमाहात्म्याद् वाञ्छितसिद्धये वाग्देवीं स्मरामि । तेन—

नमामि वाणीं सितपद्मपाणिं
विष्णुं तथा श्रीकमलेशमिष्टम् ।
नत्वा नटेशं, रमणीयवेशं
नाट्यार्थसिद्धिं गिरिजां प्रयाचे ॥

( प्रविशति नटी । )

---

❋ कलिकाताऽऽकाशवाण्यामभिनीतम् ।

प्रविश्य नटी । जयतु आर्य्यः !

सूत्रधारः । आगम्यतामार्य्ये ! साम्प्रतं त्वां स्मरामि ।

नटी । वन्देऽहमार्य्यम् ( अभिवादयति ।

अकिञ्चनाहं गुणैर्विहीना कथमशेषगुणनिलयस्यात्रभवतोऽनुकम्पापदमागच्छामीति न जाने ।

एतद्धि—

वेलां प्लावयते सिन्धुरशेषरत्नभूषणः ।
नीरसां सुषमाहीनामेष वै महतां गुणः ॥

सूत्रधारः । ( विहस्य ) नहि नहि ।

सिन्धुं रुणद्धि रोधेन सैकती तीरभूमिका ।
माहात्म्यमुदधेस्तस्मान्निमित्तं शशलाञ्छनः ॥

नटी । ( सलज्जम् ) धन्याऽस्मि भवतामौदार्येण, बहुमानिता च तत् कथ्यतां कृपयार्य, को हि परिजनेषु नियोग इति ।

सूत्रधारः । साधु । अधुनाहं कथयामि ।

नटी अवहितास्मि । तत् कथ्यतां देव !

सूत्रधारः । शृणु भद्रे ! अद्य भगवत उमामहेश्वरस्य यात्राप्रसङ्गेन बहवो गुणिजना नानादिग्देशेभ्य आगत्य इह सर्वानानन्दयन्ति । भवति च विद्यावरिष्ठानां सुधियां समागमः । तदस्माकमत्र महत् करणीयमस्ति ।

नटी । आदिशतु तदार्यः ।

सूत्रधारः । तदेव कथयामि । एषां महामहिमशालिनां मान्यजनानां सम्माननार्थमस्माभिर्नाट्यानुष्ठानं प्रकल्पितम् ।

नटी । ( सोल्लासम् ) साधु साधु । अवश्यमेव कृत्यमनुपालयामः ।

सूत्रधारः । तद्देवि, गत्वा यथास्थानं कथ्यन्तामार्यपारिपार्श्विकादयो यदविलम्बेन सर्वेऽभिनयार्थं समुद्युक्ता भवन्त्विति ।

नटी । अहो, उत्तमम् । किन्तु आर्य, किं नाम रूपकमस्माभिः प्रयोक्त-

व्यम्, केन वा तद् विरचितमिति परिज्ञातुं कौतूहलं वर्तते। तदपनयतु नः कौतूहलं देवः।

सूत्रधारः। श्रूयताम्।

आस्ते फेनिलसिन्धुचुम्बिततटा सुश्यामशोभोज्ज्वला
भूमिश्चट्टलसंज्ञकेतिललिता वङ्गेषु तीर्थात्मिका।
नीलाद्र्याहितशेखरा च परमा या वै सरिन्मालिनी
साक्षात् पङ्कजमालिनीव कमला पुष्पाम्बरा शोभते॥

नटी। अपूर्वम्! ततस्ततः?

सूत्रधारः। तत्रासीद् विप्रवर्यो विहितवहुतपा ब्रह्मनिष्ठो महर्षिः
श्रीकालीकिङ्कराख्यः कुलपतिसदृशो यो हि काशीप्रवासी।
अन्ते गङ्गाजलस्थः परमशिवपदे ध्यानमास्थाय दिव्यं
योगेशे विश्वनाथे चिरलयमगमत् सच्चिदानन्दलीनः॥

नटी। अहो भाग्यम्। महत्कथा आनन्दमातनोति। तत् कथ्यतां पुनर्देव।

सूत्रधारः। अथ किम्। एष नूनमानन्दविषयः। ततश्च श्रूयताम्।

तत्सूनुर्जनवन्दितश्च रजनीकान्तानुजः शुद्धधी-
र्यः कृष्णार्चनपुण्यसौख्यविभवः श्रीकृष्णकान्ताह्वयः।
माङ्गल्यं भुवि सन्ततं निजगुणैर्व्याकीर्य सोऽध्यापनै-
र्मूर्त्तो देवगुरुर्यथेह महितः प्राप्तो गतिं शाश्वतीम्॥

नटी। (सोल्लासम्) अहो, धन्या वयं महाजनचरितश्रवणेन। तद्देव, समाप्यतामितिवृत्तवर्णनम्, यदिदं मानसमभिरमयति।

सूत्रधारः। समापयामि तावत्। एष हि--

तदात्मजस्तातपदाब्जभृङ्गो
वाणीसमाराधनपुण्यकामी।
चकार नाट्यं सुरभाषयेदं
विश्वेश्वरो विश्वपतिप्रसादात्॥

स चैवं यदावेदयति प्रसङ्गेन—तदेव वाचयामि ।

यथा,—वाणी पदाब्जमधुपो महतां कृपार्थी
निष्किञ्चनोऽस्मि नितरां रचयामि नाट्यम् ।
नैवात्र मे निपुणता मनसः सुखार्थं
सारस्वतं व्रतमिदं परिपालयामि ॥

नटी । अहो मधुरम् । तदार्य, अत्र नियोजिता वयमपि स्वात्मनः कृतार्थान् मन्यामहे । तेनाचिरेणैव भवदादेशं पालयामि ।

सूत्रधारः । साधु । कुशलमस्तु वः ।

नटी । विजयन्तां भवन्तः ।

( प्रस्थानं करोति । )

सूत्रधारः । ( सञ्चरन् ) अहो पुण्यम् ।

धन्यं भारतभूतलं सुविपुलं पाण्डित्यरत्नोज्ज्वलं
पुण्यश्रीगिरिराजिनिर्झरयुतं तीर्थास्पदं मुक्तिदम् ।
धन्या वै सुरभारती मधुमयी शश्वद् रसोल्लासिनी
काव्यालङ्कृतिवेदशास्त्रपरमा जीयात् समाः शाश्वतीः ॥

॥ इति प्रस्तावना ॥

—०—

# प्रवुद्धहिमाचलम्

## प्रथमोऽङ्कः

### प्रथमं दृश्यम्

( हिमाचलप्रान्ते अरुणाचलशिखरे उमामहेश्वरमन्दिरम्—सन्ध्याकालः—गन्धर्व्वकन्यका गीतेन महेश्वरं स्तुवन्ति—चामरेण वीजनं विदधाति पुरोहितः—वेदिकायाः पुरतो ज्वलन्ति धूपदीपमालिकाः—वन्दनागानान्ते देवायार्पयन्ति कुसुमाञ्जलिं बालिकाः । )

गीतम्

सत्य शिव सुन्दर,
ध्यानेश पिनाकपाणे जय चन्द्रशेखर ।
नमस्ते रुद्र त्रिपुरारे
विभूतिभूषण दानवारे
दैत्यमथन गरलाशन भूतेश महेश्वर ।
नमोऽनन्त व्योमप्रान्तव्यायत-जटामाल,
मदनदहन कमलासन ज्योतिर्मण्डित सितभाल,—
कण्ठे लसितनागहार
मौलिदीप्तगङ्गाधार
जय चिन्मय अमृतालय मृत्युञ्जय शङ्कर,
शिव शङ्कर सत्य शिव सुन्दर ॥

( गानान्ते प्रणम्योपविशन्ति—पुरोहितश्चान्तर्गच्छति । ततश्च प्रविशति सखीद्वयसहिता गन्धर्व्वराजकन्या मधुच्छन्दा—सख्यौ पुष्पभाजने भूमौ स्थापयतः । )

१म सखी कलस्वना । ( राजपुत्रीमुद्दिश्य ) सखि, प्रार्थयस्व तावन्महेश्वरसमीपे ईप्सितवरम् ।

मधुच्छन्दा । सखि, किमहं प्रार्थये ? त्वमेव निवेदय आत्मानम् ।

२य सखी मधुपर्णा। राजपुत्रि, कथं वयं प्रार्थयामहे? त्वयैवात्मगतं निवेद्यताम्।

कलस्वना। (सहर्षम्) साधु साधु। एषा यथोचितं कथयति। (राजपुत्रीमुद्दिश्य) हले, का लज्जा? अयमेव वाञ्छितनिवेदनस्यावसरः।

मधुपर्णा। अये, पतिवरं प्रार्थयस्व। क्रियतां राजनन्दिनि, मनोमतपतिलाभाय आत्मनिवेदनम्। उमामहेश्वरो नूनं प्रसन्नो भविष्यति।

मधुच्छन्दा। (व्रीड़ां नाटयति) यूयं स्वमनोगतं कथयत। तदहमेव युष्माकं कृते महेश्वराय प्रार्थनां ज्ञापयामि।

कलस्वना। (सहर्षमुच्चैः) एषा खलु तव मनोगता प्रार्थना।

मधुपर्णा। सखि, जानामि तव हृद्गतं मनोरथम्। तन्मोदस्व सखि अभीष्टलाभेन। (हसन्ती राजकन्यामानन्दयति।)

(मधुच्छन्दा सखीद्वयस्य पृष्ठयोर्मृदुकराघातं करोति। नेपथ्ये शङ्खध्वनिपूर्व्वकं राजानुचरो घोषयति गन्धर्व्वपतेरागमनम्।)

नेपथ्ये चरः। (उच्चैः) भोः, एष माननीयो गन्धर्व्वपतिरागच्छति। तत् सर्व्वे पन्थानमुभयतः श्रेणिशस्तिष्ठत।

(प्रविशति पुरोहितः।)

प्रविश्य पुरोहितः। भो, महामान्यो गन्धर्व्वनगराधिपतिः श्रीमांश्चित्रभानुरायाति। संवर्द्धयत सर्व्वे राजानम्।

सख्यौ। अहो भाग्यम्। सार्थकं भविष्यति देवदर्शनम्।

मधुच्छन्दा। (सखीद्वयं प्रति) पितरौ देवदर्शनार्थमागच्छतः। न जाने किं कथयिष्यतः।

सख्यौ। अलं शङ्कया। नूनमस्मत् पुण्यार्ज्जनेच्छां विज्ञाय मोदिष्येते अत्रभवन्तौ।

अपरा गन्धर्व्वकन्याः। विजयध्वम् भद्राः। वयमपि राजदम्पतिदर्शनेन सुखिता भवामः।

नेपथ्ये चरः। अपसर्पत अपसर्पत। संवर्ध्यतां गन्धर्व्वपालः।

वालिकाः शङ्खं वादयन्ति। प्रविशति च सपत्नीकश्चित्रभानुः।)

वालिकाः। जयोऽस्तु गन्धर्व्वनाथस्य। विजयतां महादेवी।

पुरोहितः। (उपसृत्य) स्वागतं गन्धर्व्वराजस्य। आयुष्मन्, एते वयं सपत्नीकं भवन्तमभ्यर्थयामः।

चित्रभानुः। नमोऽस्तु तपोधनाय। (प्रणमति)

राज्ञी चित्रलेखा। (प्रणमति) नमामि पुरोधसम्।

पुरोहितः। स्वस्ति स्वस्ति। सुखमस्तु भवताम्।

(आशिषं करोति।)

चित्रभानुः। देव, अनुगृहीता वयं भवतामाशीर्व्वचनेन।

(महेश्वरं प्रणम्य युक्तकरः सपत्नीको दण्डायते।)

पुरोहितः। अथालङ्क्रियतामासनमत्रभवद्भ्याम्।

(निर्द्दिशति पद्मासनद्वयम्।)

(स्वयञ्चोपविशति व्याघ्रचर्म्मासने।)

चित्रभानुः। अलमायासेन देव। एते वयमुपविशामः!

(उपविशति, चित्रलेखापि पृथगासनमलङ्करोति।)

चित्रलेखा। (मधुच्छन्दां प्रति) सुखमागतासि जाते। भगवन्तं प्रणम। (सखीद्वयं प्रति) उपविश्यतां कल्याण्यः!

(सर्व्वे उपविशन्ति।)

मधुपर्णा-कलस्वने। महादेवि, देवदर्शनाभिलाषोऽस्मांस्त्वरयति। तदग्रे एव अस्माभिरागम्यते।

चित्रलेखा। माऽस्तु दोषः। श्रेयो हि सङ्कल्पेप्सितम्।

पुरोहितः। आयुष्मन्, अथ कुशलं वः पृच्छामि। अपि कुशलमत्रभवताम्?

चित्रभानुः। अथ किम्! भवतामाशिष एवास्माकं कुशलं साधयन्ति। तदत्रभवतोऽपि सुखसन्देशं ज्ञातुमिच्छामि।

पुरोहितः। महाराजस्य गुणमाहात्म्येन सर्व्वमत्र सुखकरं विद्यते।

चित्रभानुः। धन्योऽस्मि। सर्व्वेषां कल्याणेनास्माकं मङ्गलम्। तच्च देवता-प्रसादेन सम्भवति।

पुरोहितः। गन्धर्व्वपाल, इयं च सुरनदीमालिनी तुषारगिरिमण्डिता पुण्य-भूमिर्देवगन्धर्व्वकिन्नराप्सरसां क्रीड़ाभूमिः सर्व्वेषां सुखं विद-धाति। छायाशीतलासु चासु पुष्पितशैलगुहासु निभृतं तपस्यन्ति योगिनः। तेन सर्व्वतो विलसति शान्तिमयो गभीर आनन्दः।

चित्रभानुः। एवं सर्व्वं प्रभवति मङ्गलं भगवत उमामहेश्वरस्य प्रसादेन। स एव सर्व्वेषां शुभं विदधाति।

चित्रलेखा। जयतु उमामहेश्वरः। प्रणमामि भगवन्तम्।

(उद्देशेन प्रणमति)

(पुरोहितं प्रति) देव, अस्मन्मनोरथसिद्धये प्रयाचे भवदा-शिषम्।

पुरोहितः। सिध्यन्तु देवि युष्माकं मनोरथाः। भगवान् उमामहेश्वरः पूरयतु युष्माकं मनोऽभिलाषम्।

चित्रभानुः। (पुरोहितं प्रति) देव, निवेदयितुमिच्छामि भगवते महेश्वराय पुष्पाञ्जलिम्। तदनुमतिर्नः प्रदीयताम्।

पुरोहितः। स्वच्छन्दमाराध्यतां महेश्वरः। स हि पार्व्वतीनाथो भक्त-जनार्च्चनं सादरं गृह्णाति।

चित्रभानुः। (सहर्षम्) तथास्तु। (राज्ञीं प्रति) देवि, सानन्दमर्च्च्यतां महेश्वरः।

(उभौ पुष्पाञ्जलिं निवेदयतः, प्रार्थयेते च मधुरोदात्तस्वरेण।)

नमः सर्व्वमङ्गलकारणाय, प्रणतजनपरिपालकाय, विश्वरूपिणे विश्वरूपाय। नमः सितेन्दुशेखराय, निखिलकल्मष विनाशकाय,

मन्दाकिनीतरङ्गसङ्गरमणीयजटाकलापाय, नागेन्द्रभूषणाय नमो विश्वेश्वराय ।

( प्रणमतः । )

पुरोहितः । जय सच्चिदानन्द परमाव्यय ज्योतिर्म्मय शिवशङ्कर नमस्ते ।

बालिकाः । जय गन्धर्व्वामर-किन्नर-सुरनरवन्दित मङ्गलामल नमो नमस्ते ।

( प्रणमन्ती । )

चित्रभानुः । ( पुरोहितं प्रति ) अधुना परिसमाप्तास्माकं देवार्च्चना । तदनुमन्यतां भगवन् स्वभवनप्रतिगमनाय ।

पुरोहितः । राजन्, पूर्णोऽस्तु भवतां मनोरथः, भगवानुमामहेश्वरी भवत्सु प्रसीदतु ।

चित्रभानुः । सफलमस्तु ब्रह्मवचनम् । ( राज्ञीं प्रति ) तद् देवि, अलं कालक्षेपेण सपरिजना स्वनिलयप्रतिगमने तत्परा भव ।

चित्रलेखा । साधयामि तावत् । ( कन्यां प्रति ) उत्तिष्ठ वत्से । सहसखीजना अनुगच्छास्मान् ।

( सर्व्वा देवं प्रणम्योत्थायोपसर्पन्ति । )

चित्रभानुः । नमोऽस्तु आर्य्याय ( प्रणम्य चलति । किञ्चिदग्रतो गच्छन् राज्ञीं प्रति ) ( दूरतोऽङ्गुलीनिर्द्देशपूर्व्वकम् ) देवि, पश्य पश्य पुरशोभाम् ।

इतश्च दुर्गं गगनान्तचुम्बि
समन्ततं श्यामवनाभिरामम् ।
जित्वा घनालिं शरदिन्दुहासै-
र्देदीप्यते शैलतटे पुरश्रीः ॥

तेन ज्योत्स्नाप्रफुल्लायामस्यां सन्ध्यायां नितरां शोभते नगरी । विराजते चादूरतः प्रान्तवर्त्ति सुशोभनं देवस्थानराज्यं स्वप्नमयमालेख्यमिव ।

चित्रलेखा । आनन्दः—आनन्दः ।

॥ इति प्रथमाङ्के प्रथमं दृश्यम् ॥

## द्वितीयं दृश्यम्

( देवस्थानराजसभा—अभिषेकसज्जाभूषितः कुमार-विजयकेतु-रासीनः—पार्श्वयोरासनोपविष्टौ ब्रह्मानन्दभारतीसनातनौ—यथावस्थिताः पार्षदाः। सैनिकाऽर्थ्यया शङ्खो ध्वनति—प्रशस्ति-गीतिकारिण्यः करधृतपुष्पमाल्यचन्दनपात्राः प्रविशन्ति गायन्ति च विजयकेतुमभिनन्द्याभिषेकगानम्। पार्श्वयो-श्चामरधारिण्यः, पश्चाच्च छत्रधारी। समवेताः पौरजना मित्र-राजाश्च। )

### गानम्

मङ्गलवीणे गाय जयम्।
नन्दय शुभप्रभातोदयम्॥
प्रसरति मधुगन्धः,
नन्दनकानन-कुसुमचन्दनरेणु-मुकुलवन्धः,—
स्वागतो देवदूतः
स्मितप्रोज्ज्वलपूतः
महिमदीप्त वीर सौम्य प्रार्थये तव जयम्।
पृथ्वीभूषण जय शुभानन दुःखमेतु लयम्॥

( गानान्ते वन्दनाकारिण्यः कुमारं माल्यचन्दनादिना समर्च्य पार्श्वयोः दण्डायन्ते—चामरैः वीजयन्ति व्यजनकारिण्यः—रत्नासनादुत्थाय ब्रह्मानन्दभारती पुरत उपगम्य कुमारस्य ललाटे जयतिलकमङ्कयति। )

ब्रह्मानन्दभारती। श्रीमन् कुमार, अद्य पितृराज्येऽभिषिक्तोऽसि। अतः सौभाग्यलक्ष्म्या प्रसादितोऽशेषगुणगरिम्णा देदीप्यस्व प्रजानां मङ्गलाय। तत्, सर्व्वे पुरवासिनः सिंहासने सुप्रतिष्ठितं त्वामभिनन्दयन्ते।

पार्षदाः। जयतु जयतु कुमारविजयकेतुः।

ब्रह्मानन्दः। अद्य पौरप्रतिनिधयो घोषयन्तु शुभविजयं नवीनभूपालस्य।

पुरजनाः। विजयतां महाराजो विजयकेतुः। जयोऽस्तु देवस्थान-नरनाथस्य।

ब्रह्मानन्दः। (सनातनमुद्दिश्य) अतः श्रीमत्सनातन! नवीनं भूपाल-मामन्त्रयस्व मानदानेन।

सनातनः। अहो भाग्यम्। अद्यास्मकं चिरप्रणयिनं कुमारं विजयकेतुं सिंहासनमलंकुर्वन्तं सभाजयामि। तेन च रत्नकाञ्ची-कनकपुरवीरेन्द्रनगरोत्तरकूटाधिपतयो मित्रराजन्याश्चात्र भवन्तं संवर्द्धयन्तु।

मित्रनरपतयः। अशेषगुणनिलयं महाराजविजयकेतुं संवर्द्धयामः।

पार्षदाः। विजयतां महाराजो विजयकेतुः।

ब्रह्मानन्दः। तथास्तु। (विजयकेतुमुद्दिश्य) स्वस्ति भूपालाय। अभिषे-कोत्सवे अद्य भवन्तं मङ्गलाशिषाभिनन्दयामि।

पार्षदाः। जयतु जयतु महाराजो विजयकेतुः। जयोऽस्तु देवस्थान-नराधिपस्य।

ब्रह्मानन्दः। अधुना मङ्गलवचनमहं वाचयामि। (राजानमुद्दिश्य) नरमणे विजयकेतो! उत्तरतोऽनन्तनभश्चुम्बिनी दिगन्त-प्रसारिणी तुषारशृङ्गमाला सुविशालं देवस्थानं परिरक्षति। प्रान्तदेशे चास्य समुन्नतं सुधाधवलमरुणाचलदुर्गं मूर्त्तः कैलास-नाथ इव दीप्यते।

पार्षदाः। जयतु जयतु देवस्थानेश्वरः।

ब्रह्मानन्दः। किञ्चास्य राज्यस्य गौरवरक्षार्थं दुर्गमौलिशोभिनीयं जयपताका सर्व्वैरेव रक्षणीया।

सनातनः। अक्षयमस्तु अरुणाचलदुर्गविजयकेतनम्। एतद्धि देवस्थानस्य गौरवमावहति।

पार्षदाः। अम्लानमस्तु देवस्थानगौरवम्।

सेनाध्यक्षः । वयं देवस्थानगौरवमरुणाचलदुर्गं रक्षिष्यामः ।

सनातनः । ( ब्रह्मानन्दमुद्दिश्य ) आचार्य्यपाद ! जन्मभूमेश्चिरसेवकोऽहं प्रतिज्ञां करोमि—अरुणाचलदुर्गं वयं रक्षिष्यामः ।

ब्रह्मानन्दः । ( सहर्षम् ) जयन्तु वीराः । अक्षयमस्तु देवस्थानगौरवम् ।

पार्षदाः । विजयन्तां गुरुपादाः ।

सनातनः । आचार्य्यपाद ! उच्चार्य्यतामाशीर्व्वचनमस्माकं मङ्गलाय ।

ब्रह्मानन्दः । अथ किम् । भूयिष्ठं कल्याणमस्तु देवस्थानवीराणाम् । वीर्य्यं वोऽक्षयमस्तु । ( विजयकेतुमुद्दिश्य ) नरमणे !

विजयकेतुः । आदिशन्तु आचार्य्यपादाः ।

ब्रह्मानन्दः । वीरवर्य्य ! समाप्तोऽयमभिषेकोत्सवः । अतोऽहं कृतकृत्यो व्रतसाधनार्थमाश्रमं गच्छामि । तद्वीर्य्येण महत्त्वेन च राज्यं रक्षणीयम् । परिपालय च प्रजाः पितृधर्म्मेण ।

विजयकेतुः । देव ! कथं त्यज्यते स्नेहार्थी परिजनः ।

ब्रह्मानन्दः । मा भूत् खेदः । तपस्यार्थं गच्छामि । दूरादपि तपस्यतो मे शुभकामना युष्माकं श्रेयो विधास्यति । भद्रमस्तु सकलानाम् ।

( विजयकेतुरुत्थाय कृताञ्जलिस्तिष्ठति । ब्रह्मानन्दः स्वस्ति-वचनमुदीरयति । )

॥ इति प्रथमाङ्के द्वितीयं दृश्यम् ॥

—०—

## तृतीयं दृश्यम्

( विशालपुरराजपथः—राजविदूषको विनोदश्चलति—प्रविशतो नागरिकौ । )

१म नागरिकः । ( वयस्यमुपगम्य ) भो राजवयस्य ! कुत्र गच्छसि ? कथं त्वरान्वितं त्वां पश्यामि ।

विदूषकोविनोदः । अरे नास्ति मे कथयितुमवसरः । तन्मा मे गतिं विलम्बय ।

२य नागरिकः । भोः, क्षणं तिष्ठ । न ते कालक्षेपं कारयिष्यामि । कथय, कथं त्वरयसीति ।

विनोदः । भद्र, मा मे विनाशकारणं भव । यद्यहं कृत्यसाधने विलम्बं करोमि, तदा प्राणहानिर्मे भविष्यति ।

१म नागरिकः । कथं प्राणहानिः ? कस्य नु स्कन्धदेशे मस्तकद्वयं तिष्ठति, यो राजवयस्यस्यानिष्टं साधयिष्यतीति ?

विनोदः । अरे शृणु,—अहं तावत् श्रीमन्नरपालविक्रमवर्द्धनेन समादिष्टः सर्व्वान् मठवासिन्नपणकांस्तथा धर्म्माचार्य्यांश्च विज्ञापयितुं यत् सर्व्वैस्तैः राष्ट्राधिनायकस्यानुशासनात् सन्त्यक्तव्या मठनिवासा इति ।

२य नागरिकः । कथमेवममनुशासनं प्रदिष्टम् ?

विनोदः । श्रूयताम् । अद्यारभ्य सर्व्वे मठा मन्दिराणि तथा तत्तदधिकारगताः सम्पत्तयश्च राष्ट्रायत्तत्वं गच्छन्ति ।

१म नागरिकः । ततस्ततः ?

विनोदः । अतः सर्व्वैर्मठमन्दिराश्रितजनैः राष्ट्रस्य कृते कृषिशिल्पादिकर्म्मसु आत्मनियोगः करणीय इति । प्रवर्त्तितं राजानुशासनम् ।

२य नागरिकः । अहो विचित्रम् । किं नु धर्म्माचार्य्यैर्व्रतिभिश्च ध्यान-

योगादिकं विहाय साधारणजनवत् कायक्लेशेन उदरान्न-संस्थानं विधेयम् ?

विनोदः। अथ किम्। नातः परं मठनिवासिनः प्रव्राजकाश्च स्वच्छन्द-दधि-दुग्ध-फल-मिष्टान्नभोजनेन निष्कर्म्मजीवनमुद्यापयितुं शक्ष्यन्ति। सर्व्वैः श्रमः साधनीयः।

१म नागरिकः। अहो, नवीनमनुशासनम्। कालस्येयं कुटिला गतिः!

विनोदः। एवमस्तु। सर्व्वे स्त्रीपुरुषाः प्रौढ़वृद्धाः श्रमेण जीवनं यापयिष्यन्ति। कथं वा मुण्डितशिरस्काः काषायधारिणोऽलस-सुख-विलासेन कालं नेष्यन्ति ?

२य नागरिक। सत्यं खल्वेतद् वचनम्। कथं वा अधिकारेषु वैषम्यं भवेत् ?

विनोदः। युक्तमेतत्। एते खलु परिव्राजका गृहजामातर इव दुग्ध-कदली-मिष्टान्नादिना उदरं सेवन्ते, न हि कुर्व्वन्ति श्रमम्। तदेते राष्ट्रकर्म्मसु नियोजयितव्याः।

१म नागरिकः। जयतु राष्ट्रपालो विक्रमवर्द्धनः। स हि युक्तमाचरति। नोचितं खलु नैष्कर्म्येण जीवनयापनम्।

(नेपथ्ये ढक्कानादः—चारा राजानुशासनं घोषयन्ति।)

प्रविश्य चाराः। भो भो नागरिकाः श्रृणुत। श्रीमद्राष्ट्रपालो विक्रमवर्द्धनः समादिशति, यदद्य प्रभृति सर्वेषां पौरजानपदानां भूसम्पदो राष्ट्रायत्ता भवन्तीति। तेन सर्व्वाभिः प्रजाभी राष्ट्राधीनतया कृषिशिल्पादिकर्म्मभिर्जीवितव्यमिति।

विनोदः। बुध्यते किम् ? राष्ट्रनायकस्यादेशे लङ्घिते कठोरदण्डविधानम्। भवेच्चाहाररोधः।

१म नागरिकः। अहो, को हि तर्हि उपायः ? वयं केवलं वलीवर्द्दा इव श्रमकारिणः, न भवेदाहारव्यतिरिक्तेषु भोगाधिकारः।

१य नागरिकः। किमस्माभिस्तर्हि शर्कराभारवाहिवृषभैरिव वर्त्तितव्यम्। अहो कठोरं श्रमसाधनम्।

विनोदः। (सहर्षम्) भोः, कुरु कार्य्यम्, कुरु कार्य्यम्। शास्त्रेषु

चोक्तं—कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचनेति। तद् भ्रातरः! का चिन्ता? यन्त्रवत् प्रचलितव्यम्। यन्त्रवज्-जीवितव्यम्। तेन जीविष्यथ।

१म नागरिकः। भो राजवयस्य! किं वयं केवलं यन्त्रभूताः, यन्नास्ति स्वातन्त्र्यं मानसानाम्?

विनोदः। भ्रातरः! एतत् हि यान्त्रिकयुगम्। यन्त्रमेव मनुष्याणां भाग्यं नियन्त्रयति। अतोऽहर्निशं चक्रवदावर्त्तितव्यम्; ऊर्द्ध्वादधः, अधस्तलाच्चोद्ध्र्वं घूर्णस्व-घुड़घुड़म्-घुड़घुड़मिति।

१म नागरिकः। (दीर्घं निःश्वस्य) हुम्। एतद्धि अस्मज्जीवितम्। एतद्धि नीरसं मरुस्थलमिवाभाति।

२य नागरिकः। न हि पुनरतो निष्कृतिं पश्यामि।

विनोदः। कथं निष्कृतिः? ऊर्णनाभनीतिमवलम्ब्य कर्म्मजाले विचरितव्यम्। एतत् कर्म्मजालचङ्क्रमणमेव जीवनोपायं साधयिष्यति।

चारः। (विनोदं प्रति) भो विदूषक! त्वमपि किं करोषि? वयं तु सर्व्वाधिनायक ज्ञापयिष्यामो यद् राजवयस्यः कर्म्महीनं जीवनं यापयतीति।

विनोदः। मैवं वद। न जानासि किं कर्म्मसचिवोऽहं राष्ट्रनायकस्येति? कुतो मे विश्रामः? अहर्निशं राजकार्य्यमनुतिष्ठतो मेऽधुना प्राणक्षयः समायाति।

चारः। कथम्?

विनोदः। न जानासि भद्र मम वृत्तम्। नगरस्योत्तरप्रान्ताद् दक्षिणान्तं, पूर्व्वतश्च पश्चिमान्तप्रदेशं यावन्मठेषु मठेषु राजवार्त्ताविज्ञापन-मेव नियोगः। तेन गुरुतरश्रमेण नितरां सीदामि।

१म नागरिकः। भ्रातः, कथमेवमात्मानं क्लेशयसि?

विनोदः। अरे, उदरपूरणार्थं एष नियोगः। न करोमि चेत् कर्त्तव्य-पालनम् अन्नाभावेन पञ्चत्वं गमिष्यामि। भवेच्च राजदण्डः।

चारः । भद्र, एतावत् कालं सुप्रचुरं क्षीरपायसं त्वयास्वादितम् । राजप्रसादेन भक्षिताश्च प्रचुरा लड्डुकमोदकाः । तदधुना कार्य्यसाधने कथमापत्तिः ?

नागरिकौ । ( युक्तभावेन ) अहो, भाग्यवान् खलु राज्ञानर्म्मसचिवः । न एष क्लेशं जानाति ।

विनोदः । भो, चिरं सुखलालितोऽहं क्लेशं नाजानाम् । अधुना तु विपर्य्ययः समुपस्थितः । अधुनाहं राजादेशं पालयामि, किन्तु न हि लभ्यते क्षीरपायसम् ।

चारः । अलं खेदेन । जीवनरक्षार्थं श्रमसाधनमवश्यकर्त्तव्यम् । ( पौरानुद्दिश्य ) भो भो नागरिकाः, सत्वरं शिल्पाधिकारं गत्वा जानीत कर्म्मनियोगविषयम् ।

( ढक्कां वादयन् प्रस्थानं करोति )

विनोदः । ( स्वगतम् ) अहो, गात्रं मे शीर्णकदलीव विशीर्य्यते ।

एषोऽहम्— विशीर्णगात्रः श्रमभारदीनः
क्षुत्क्लेशदैन्याहतजीवशेषः ।
जातः प्रकामं जठरान्नहेतो
राजान्नदासो गतसौख्यमानः ॥

१म नागरिकः । महाभाग, श्रममाहात्म्याद् राज्ञा पुरस्कृतो भविष्यसि ।

विनोदः । पुरस्कारस्तु तिरस्काराय भवति ।

२य नागरिकः । तत् कथम् ?

विनोदः । ( गीतिस्वरेण )—

अर्थमनर्थं भावय नित्यम्
तेनैव दुःखं भवतीति सत्यम् ।

१म नागरिकः । ( प्रीतिमनुकृत्य ) अतो ब्रवीमि कुरु राजकृत्यम् )

विनोदः । मा मा चिन्तय भ्रातर्वित्तम् । ( प्रस्थानं करोति )

१म-नागरिकः । ( उच्चैर्विहस्य ) अहो, रसिकोऽयं चित्तमानन्दयति । तच्चल्यताम् चल्यताम् ।

२य. नागरिकः । चल रे प्रचल ।

( गमनं कुर्व्वतः )

॥ इति प्रथमोऽङ्कः, तृतीयदृश्यान्तः ॥

—०—

## द्वितीयोऽङ्कः

### प्रथमदृश्यम्

[ विशालपुरराजप्रासादः—राष्ट्रपतिर्विक्रमवर्धनोऽमात्येन सार्धं मन्त्रणां करोति । ]

विक्रमवर्धनः । अमात्यप्ररोचन, अधुना वयं सङ्कटजाले निपतिताः ।

अमात्यप्ररोचनः । राष्ट्रपाल, का चिन्ता भवन्तं पीड़यति ? विपुलं विशालपुरराज्यं भवत एकनायकत्वेन सुघटितं सुसंबद्धं च तिष्ठति । अनुगताश्च पुरजनाः कठोरश्रमेण कृषिजातं शिल्पसम्भारं चोत्पाद्य राजभाण्डागारं परिपूरयन्ति । अतः कथमुद्वेगः ?

विक्रमवर्धनः । सत्यमेतद् विशालपुरं शस्त्रबलेन, धनसम्पदा, गणशक्त्या च अतुलनीयमिति । किन्तु, सन्निहितस्य देवस्थानराज्यस्य सुसमृद्धिरस्माकं गौरवं परिम्लानयति ।

प्ररोचनः । तथास्ति । किन्तु धीमन्, नास्त्यस्माकं सामर्थ्याभावः । दिगन्तव्यायतमस्माकं राज्यमायतनमाहात्म्येनापरराष्ट्राण्यतितरति । अतः सुदृढ़राजनीतिप्रयोगेण सुसंवद्धमेतद्राज्यं सर्व्वोच्चराष्ट्रगौरवमभिगमिष्यतीति नास्त्यत्र संशयः ।

२

विक्रमवर्धनः। श्रूयताममात्यप्रवर ! अशेषकनकरत्नसमृद्धं देवस्थानं विद्याबुद्धिधर्म्मोत्कर्षख्यातिहेतोर्बहुकालादारभ्य कीर्त्तिमावहति। सा हि फलपुष्पशस्यसमाकीर्णा सरिन्मालाविधौता देवस्थाननगरी समृद्धिसमुच्चयैरस्मानधिक्षिपति।

प्ररोचनः। भवतु तत्। अस्माकमपि का न्यूनता ? भवतः कठोरानुशासननीतिसंवद्धं विशालपुरमचिरकालेनैव पूर्णतमां समृद्धिमापत्स्यते। तेनास्माकं समरास्त्रादीनां प्राचुर्य्यं विधाय राष्ट्रस्य शक्तिवर्द्धनं करिष्यामः।

विक्रमवर्द्धनः। किन्तु वन्धो, अस्त्येको महान् समस्याविषयः। भविष्यति काले सम्भविष्यति अस्मज्जनानां स्थानाभावः। जनिष्यते च जनसंख्यावृद्धिहेतोः पुष्कलः खाद्याभावः। तेन देवस्थानस्य गिरितटवर्तिविशालप्रान्तदेशेऽस्मद्राज्यविस्तार एव समाधानं मन्यते।

प्ररोचनः। तथास्तु। देवस्थानस्य प्रान्तायता जनविरला विशालोपत्यका अरक्षिता तिष्ठति। तत्रैव राज्यसम्प्रसारोऽनुकूलो भवति।

विक्रमवर्द्धनः। अहमपि तदेव चिन्तयामि। नास्त्यत्र उपायान्तरम्। तन्ममाऽत्र सहायो भव।

प्ररोचनः। अथ किम्। अवश्यमेव कर्त्तव्यमनुपालयामि। सा हि शस्यश्यामला देवस्थानभूमिर्नयनं लोभयति। किन्तु राजन्, अस्मन्नीतिसाधनेन देवस्थानेन सहास्माकं मैत्रीवन्धनं छिन्नं भविष्यति।

विक्रमवर्द्धनः। भवतु तत्। वीरभोग्यायां वसुन्धरायामात्मप्रतिष्ठासाधनमेव प्रथमं कृत्यम्।

प्ररोचनः। वाढम्। राजलक्ष्मीर्वीर्य्यवन्तमेव प्रसादयति। अहमपि तच्चिन्तयामि।

विक्रमवर्द्धनः। साधु। शृणु वीर ! देवस्थानप्रान्तवर्त्तिषु गिरिप्रान्तरेषु पथां परिचयज्ञानार्थं तत्र गुप्तचरा मया प्रेषिताः। किञ्च, नरपते-

विजयकेतोर्वल-यानोपकरणादिसमरसामर्थ्यमन्यानि च गुप्त-तथ्यानि परिज्ञातुं चारा मया नियोजिताः ।

प्ररोचनः । साधु साधु । किञ्च अतीव सरलचित्ता हि देवस्थाननिवासिनः । ते च प्रकृतिदत्तैश्वर्य्यनिचयेषु चिरसुखलालिता निरुपद्रवाः कालं नयन्ति । अतस्तत्र समराभियानं सुसाध्यम् ।

विक्रमवर्द्धनः । सम्यगुच्यते । अत इदानीं सूचिभेद्ये तमसि अस्मत्सैनिका गूढ़गिरिपथमवलम्ब्य अरुणाचलदुर्गप्रान्तं प्रविशन्तु । वर्षन्तु च निशायामाग्नेयास्त्रेभ्यः प्रचण्डमनलराशिं दुर्गनाशाय ।

प्ररोचनः । तथास्तु । अतो विधीयतां रणसज्जाऽभियानाय ।

विक्रमवर्द्धनः । साधु साधु । ( नेपथ्याभिमुखः ) कः कोऽत्र भोः ?

( प्रविशति दौवारिकः )

प्रविश्य दौवारिकः । आज्ञापयतु नाथः ।

विक्रमवर्द्धनः । अये, आहूयताम् सेनापतिश्चण्डशासनः ।

दौवारिकः । यथाज्ञापयति देवः । ( निष्क्रान्तः )

( प्रविशति सेनापतिः )

सेनापतिः चण्डशासनः । जयतु राष्ट्रपालः । एषोऽहमागच्छामि ।

विक्रमवर्द्धनः । स्वागतं सेनापतेः । श्रूयतां प्रयोजनीयविषयः ।

सेनापतिः । आदिशतु देवः ।

प्ररोचनः । सेनापते, गुरुतरकार्य्यार्थमाहूतोऽसि । तद्धि देवः कथयिष्यति ।

सेनापतिः । ( विक्रमवर्द्धनमुद्दिश्य ) आज्ञापयतु नरपालः ।

विक्रमवर्द्धनः । सेनाधीश, गूढ़ं ते कथयामि । अपि दृष्टं त्वया देवस्थान-प्रान्तवर्त्तिनि शैलशिखरेऽवस्थितमरुणाचलदुर्गम् ?

सेनापतिः । देव, दृष्टं तत् । किञ्च, तत्राभ्रंलिहशैलशिखरे विराजमानं विजयकेतनमण्डितं दुर्गशीर्षं नभस्तटं विचुम्बति ।

प्ररोचनः । घोषयति चैतदस्मत्कीर्त्तिराशिं मलिनीकृत्य देवस्थानस्य विजय-माहात्म्यम् ।

विक्रमवर्द्धनः । नैतदुपेक्षणीयम् । यतः प्रबलः प्रतिवेशी सदैवोद्वेगाय भवति ।

सेनापतिः । तत् किमत्र विधेयम् ? समादिश्यतामस्मन्नियोगः ।

विक्रमवर्द्धनः । कथयामि तत् । अस्माभिरविलम्बेन देवस्थानमुद्दिश्य अभियानं कर्त्तव्यम् ।

सेनापतिः । (सहर्षम्) साधु । तथैव विधास्यामि देव !

प्ररोचनः । तदिदानीमुपयुक्तसंख्यकाः सैनिकाः कृत्यार्थं नियोजयितव्याः ।

सेनापतिः । गृहीतोऽमात्यनिर्देशः । (राजानमुद्दिश्य) देव, अनुशासनं सर्व्वथा पालयामः ।

विक्रमवर्द्धनः । अभिनन्दामि त्वाम् । सपदि यूयं देवस्थानप्रान्तमधिकृत्य स्वाधिकारमानयत प्रतिवेशिदुर्गम् । समानयत च समुत्पाट्यास्य विजयकेतनमस्माकमुल्लासाय ।

सेनापतिः । जयोऽस्तु देवस्य । पालयिष्यामि राष्ट्राधिपस्यादेशम् । नूनमचिरेणैव सेनासन्निवेशमायोजयामि ।

(प्रस्थानं करोति)

विक्रमवर्द्धनः । (सहर्षमुत्थाय) मन्त्रिवर्य्य, प्रचारयास्मदनुशासनं पुरजनेषु । अहमपि कालोचितं साधयामि ।

(कक्षं त्यजति)

प्ररोचनः । जयोऽस्तु राष्ट्रपालस्य । विजयतां नरनाथः ।

( प्रस्थानं करोति )

इति द्वितीयाङ्के प्रथमं दृश्यम् ।

—०—

## द्वितीयोऽङ्कः

### द्वितीयं दृश्यम्

( विशालपुरराजवर्त्मनि मठवासिनः परिव्राजकाः परिक्रमां कुर्वन्ति )

प्रविश्य परिव्राजकः। सत्यं शरणं गच्छामि। शीलं शरणं गच्छामि। धर्म्मं शरणं गच्छामि। ( नागरिकानुद्दिश्य ) भो भो नागरिकाः, सत्यं शरणं व्रजत। शीलं चरत। धर्म्ममाचरत।

(प्रविशन्ति नागरिकाः)

प्रथमनागरिकः। माननीया धर्म्माचार्याः, किं भवन्तो न जानीत, यद् राज्येऽधुना नवीनराजविधानेन धर्म्मप्रचारो निषिद्ध इति। तदधूना धर्म्मोपदेशकै जीविकार्थं कृषिशिल्पादिकर्म्मणामन्यतमं ग्रहीतव्यम्।

प्रधानपरिव्राजकः। श्रावक, किं कथयसि ? वयं तु धर्म्मयाजकाः निष्कामैरस्माभिर्लोकमङ्गलाय धर्म्मनीतिः प्रचार्य्यते।

प्रथमनागरिकः। धर्म्मपाद, एवमहं जानामि। किन्तु धर्म्मप्रचारोऽधुना निषिद्धः। किञ्च प्रकाश्येनमन्यैरपि गृहमेधिभिः धर्म्माचरणं प्रतिषिद्धम्।

अन्ये नागरिकाः। सत्यं सत्यम् धर्म्माचरणं धर्म्मव्याख्यानं वा निषिद्धम्।

परिव्राजकाः। ( कर्णयुगलं पिधाय ) अब्रह्मण्यमब्रह्मण्यम्! नैवं कदापि श्रुतं न वा क्वचिद् दृष्टम्!

द्वितीयनागरिकः। अधुनैतद् विधानं न केनापि लङ्घयितुं शक्यते।

तृतीयनागरिकः। तत् कायिकश्रमेण जीवनं यापयितव्यम्। कृषिशिल्पादिकमेव सर्व्वेषां जीवनधारणोपायः।

प्रधानपरिव्राजकः। अहो, अब्रह्मण्यमब्रह्मण्यम्! तत् किं वयं धर्म्मं त्यजामः ?

अन्ये परिव्राजकाः। न वयं धर्म्मं परिहरामः। न खलु व्रतं त्यजामः।

प्रथमनागरिकः। मैवमुच्चैः कथयत। चाराः श्रोष्यन्ति चेदनर्थो भविष्यति।

नागरिकाः। महाभागाः! राजविधानमवश्यमेव पालनीयम्। नो चेत् किं फलं दण्डलाभेन ?

प्रधानपरिव्राजकः। (सखेदम्) किं परिणामे धर्म्माचरणं परित्यक्तव्यम् ?

प्रथमनागरिकः। अथ किम्। एष खलु राजादेशः। अधुना विशालपुरस्य मठमन्दिरचित्तविनोदनस्थानानि राष्ट्रायत्तानि। तद्-राष्ट्र-विधिरवश्यमेव पालनीयः।

परिव्राजकाः। तर्हि केनोपायेन वयं सन्न्यासिनो जीविष्यामः ?

प्रथमनागरिकः। श्रमविनिमयेन प्रजानां वृत्तिविधानमास्ते। तद्व्यतिरिक्त—धनार्ज्जनेन नास्ति प्रयोजनम्। न च समर्थितोऽर्थसञ्चयः। यतो राष्ट्रमेव जनानां जीवनं नियन्त्रयति।

प्रथमपरिव्राजकः। अहो, कठोरं विधानम्! क्लेशकरो जीवनव्यापारः।

(प्रस्थानं करोति)

अन्ये परिव्राजकाः। क्लेशकरः, क्लेशकरो व्यापारः।

(अनुगच्छन्ति)

(ततः प्रविशति अन्यपथेन सानुचरः सेनापतिः)

प्रविश्य सेनापतिः। कथमयं कोलाहलः ? (नागरिकान् प्रति) भोः! के तावदत्र कलरवं कुर्वन्ति ?

प्रथमनागरिकः। सर्वाधिनायक, एते खलु मठनिवासिनः परिव्राजका यति-धर्म्मार्थं धर्म्मोपदेशनां कुर्व्वन्ति।

द्वितीयनागरिकः। एते हि धर्म्मप्रचारमनुतिष्ठन्ति।

सेनापतिः। अयुक्तमेतत्, कथं ते श्रमं विहाय राजविधानमुपेक्ष्य धर्म्मविलास-मुपदिशन्ति ? साम्प्रतं कुत्र ते गच्छन्ति ?

प्रथमनागनिकः। (भीतिविह्वलः) ते—ते हि।

सेनापतिः। (सरोषम्) कथं सत्यमपलपसि ? ब्रूहि, कुत्र ते गता इति।

द्वितीयनागरिकः। पुरपाल, सत्यमत्र वदामि। ते हि सन्न्यासिनो मठं प्रस्थिताः।

सेनापतिः। कथं मठं प्रतिगच्छन्ति? मठा हि राष्ट्राधीनाः। तेषु च शिल्पप्रतिष्ठानानि स्थाप्यन्ते।

द्वितीयनागरिकः। माननीय पुरपाल, किमधुना देवायतनेषु धर्म्मचर्य्या न भविष्यन्ति?

सेनापतिः। अथ किम्। अधुना शस्यशिल्पजातेनैकान्ततः प्रयोजनम्। तत् किं भविष्यति धर्म्मविलासेन? अतो मठादिषु शस्यभाण्डागारयन्त्रागरादिकं स्थापनीयम्।

नागरिकाः। अहो साधु साधु। विजयतां सेनापालः।

सेनापतिः। तत् पालयत राजविधानम्। प्रचारयत संदेशमिमं प्रतिवेशिषु।

(सानुचरः प्रस्थानं करोति)

प्रथमनागरिकः। (इतस्ततः पश्यन्) अहो, मुक्तोऽस्मि मृत्युपाशात्!

द्वितीयनागरिकः। दिष्ट्या जीवामः। मोचिता वयं कृतान्तकवलात्। तत् किं भविष्यति निष्किञ्चनानामेषां धर्म्माचार्य्याणाम्?

प्रथमनागरिकः। अरे, चिन्तय तावन्निजभाग्यम्। किं वा वयं धर्म्मंत्रविनां परिव्राजकानां कृते करिष्यामः?

द्वितीयनागरिकः। भ्रातरेते धर्म्मार्थिनः परित्यक्तकामकाञ्चना जनानां कर्म्मलाभार्थं प्रचेष्टन्ते। तदधुना वृत्तिविहीनाः कथं ते जीविष्यन्ति?

प्रथमनागरिकः। भो, अधुना यन्त्रराज एव शरणम्। उदरान्नविधानार्थं यन्त्रसहयोगेन कठोरश्रमः करणीयः।

द्वितीयनागरिकः। तत् किं भविष्यति ललितकला-विद्याविषयाणाम्?

प्रथमनागरिकः। ते हीदानीमप्रासङ्गिकव्यापाराः। अतो मित्र, अलमन्यया चिन्तया।

(नेपथ्ये यन्त्रशालात उच्चवंशीध्वनिः श्रमिकाणां कर्म्मकेन्द्रगमनकालं मुहुर्मुहुर्घोषयति।)

प्रथमनागरिकः। अये, यन्त्रराज आह्वयति। तदलं कालविलम्बेन। प्रचल्यतां कर्म्मस्थानम्प्रति।

द्वितीयनागरिकः। प्रचल रे प्रचल।

प्रथमनागरिकः। (उच्चैः) जयतु जयतु यन्त्रराजः। विजयतां यन्त्रदेवः।

(उभौ द्रुतं प्रस्थानं कुरुतः)

(नेपथ्ये पुनः यन्त्रशालायामुच्चवंशीध्वनिः, श्रमिकानां कर्म्मस्थानयात्रिणां कोलाहलश्च।)

इति द्वितीयाङ्के द्वितीयं दृश्यम्।

# तृतीयोऽङ्कः

## तृतीयं दृश्यम्

[ सुप्रशस्तप्रकोष्ठमध्ये विक्रमवर्द्धन आसीनश्चिन्तयति ]

विक्रमवर्द्धनः। [ स्वगतम् ]—सा हि तुषारमालिनी शिखरमाला प्रान्तदेशे प्राचीरवच्छोभमाना देवस्थानं रक्षति। गिरिप्रान्तवर्त्तिनीं तां गहनवनश्यामलामुपत्यकामुद्दिश्यास्माकमभियानं प्रकल्पितम्। [ उत्थाय अग्रतो दण्डायमानो। दूरवीक्षणयन्त्रेण दूरं पश्यन् ] अहो, दृश्यतेऽसौ नयनाभिरामवनकुञ्जशोभितोऽरुणाचल गिरिशिखरः। तत्र समुत्तुङ्गदुर्गशीर्षे समुड्डीनं देवस्थानविजय-केतनं मामाकर्षति। यातु,—कः कोऽत्र भोः?

प्रविश्य दौवारिकः। जयतु राष्ट्रपालः। अथ किमादिशति भवान्?

विक्रमवर्द्धनः। दौवारिक, आकार्य्यतां प्रधानामात्यः। कथ्यतामसौ यदधुना तेनास्मत्प्रयोजनमस्तीति।

दौवारिकः। यथाज्ञापयति देवः [ निष्क्रान्तः ]

विक्रमवर्द्धनः। [ स्वगतम् ]—न जाने, कियती तावदस्माकं सैनिकानां प्रस्तुतिरिति।

दौवारिकः। [ पुनः प्रविश्य ] देव, अयमागच्छति अमात्यप्रधानः। [ प्रविशन्त-ममात्यपुरोचनमुद्दिश्य ] इत इतो महाभाग! अत्रभवान् राष्ट्राधिपः प्रतीक्षते भवन्दम्।

प्रविश्य पुरोचनः । विजयतां नरपालः । एषोऽहं समुपस्थितः ।

विक्रमवर्द्धनः । स्वागतममात्यवर्य्यस्य । ज्ञातुमिच्छामि किं सम्पन्नोऽस्माकं जयाभियानोद्योग इति ।

पुरोचनः । राजन्, समाप्तप्राया हि अस्माकं समरसज्जा । सैनिकाः सेनापतेरादेशं प्रतीक्षमाणा अभियानार्थमुद्यतास्तिष्ठन्ति । किञ्च, प्रागेवारुणाचलप्रदेशेषु चाराः प्रेषिताः । कर्त्तव्यानि समाप्य प्रत्यागतेषु तेषु युद्धाभियानमारप्स्यते ।

विक्रमवर्द्धनः । [ सहर्षम् ] साधु साधु, अमात्यप्रधान ! वाहुवलमेव विजयाय कल्पते । यतो वीर्य्यवन्तो न हि दैवमपेक्षन्ते । यातु,—[ दौवारिकं प्रति ] दौवारिक, समाज्ञापय सेनापतिं मदीयाह्वानम् ।

दौवारिकः । यद्देव आज्ञापयति [ निष्क्रान्तः ]

[ प्रविशति सेनापतिः ]

सेनापतिः । [ प्रविश्य ] विजयतां नरनाथः । एषोऽहमागच्छामि ।

पुरोचनः । अहो, यथाकालं सम्प्राप्तः सेनानायकः । [ सेनापतिं प्रति ] सेनाधिनायक, एष महाराजो भवतां समराभियानप्रस्तुतिं विज्ञातुमुत्सुकस्तिष्ठति ।

सेनापतिः । [ राजानमुद्दिश्य ] अलमुद्वेगेन नाथ । युद्धयात्रार्थं समुद्यतास्तिष्ठन्ति अस्मत्सैनिकाः । तत्र गिरितटेषु प्रचुराणि समरोपकरणानि गूढ़ं सम्प्रेषितानि । दूताश्च कृत्यानि सम्पाद्य प्रत्यागताः ।

विक्रमवर्द्धनः । [ सहर्षम् ] साधु साधु । वाञ्छितोऽयं शुभसन्देशः । तद् आरभ्यतां दुर्द्धर्षसैन्यवाहिनीसमन्वितमभियानं जयलाभाय ।

सेनापतिः । शिरोधार्य्यं राजानुशासनम् । तदविलम्बेन यात्रां करिष्यामः । न खलु विजयवार्त्तामन्तरेण प्रत्यागमिष्यामः ।

पुरोचनः। [ सोत्साहम् ] सानन्दमभिनन्दये सेनापालम्। वयं तु जयमण्डितं युष्मत्प्रत्यावर्त्तनं प्रतीक्षामहे।

सेनापतिः। अलं चिन्तया। वयं जयलाभेन कृतकृत्याः प्रत्यागमिष्यामः। [ राजानं प्रति ] तद् आदिशतु नाथः।

विक्रमवर्द्धनः। गम्यतां जयलाभाय। वाहुल्येन सिध्यन्तु वो मनोरथाः।

सेनापतिः। जयोऽस्तु नरनाथस्य। [ प्रणम्य निष्क्रान्तः ]

पुरोचनः। अहमपि प्रचलामि। [ विक्रमवर्द्धनं प्रति ] श्रीमन् नरनाथ, अधुना निश्चिन्तो भूत्वा विनोदयतु भवान् मानसं विश्राम-सौख्येन। [ निष्क्रान्तः ]

विक्रमवर्द्धनः। [ स्वगतम् ] अहो, कष्टकरं राष्ट्रनायकानां जीवितम्! कुत्र वा सुखावसरो राज्याधिपानाम्?

[ वहिः पथि कापि गायति गानम् ]

( गानम् )

कण्ठे कण्टककुसुमहारश्चरति मरुचारी,
लसति वह्निकिरणराशिर्भुवनवक्षोविदारी।
हे यात्रिन् सुखकल्पनाचर
मायामरीचिकामनोहर
अन्तहीनधूसरदिशि ध्वनति हृदयंहारी
मरणवंशीकरुणशङ्खो दिगन्तप्रसारी।

विक्रमवर्द्धनः। [ स्वगतम् ] अये, केयं गायति? मम मानसमवसादयति चासौ संगीतरागः। तदस्मिन् समये प्रियवयस्यो यदि आगच्छेत्, तर्हि संभवेद् ग्लानेरुपशमः। अतो नर्म्मसचिवमाह्वयामि। [ दौवारिकमुद्दिश्य ] भोः?

उपसृत्य दौवारिकः। आज्ञापयतु देवः।

विक्रमवर्द्धनः। दौवारिक, वहिर्गत्वा विज्ञापयासुं गीतकारिणीं यदहं तां द्रष्टुमिच्छामीति। आहूयतां ततश्च प्रियवयस्यो विनोदः।

दौवारिकः। यद्देव आज्ञापयति। [ निष्क्रम्योच्चैर्नेपथ्ये ] आर्य्ये, अत्रभवान् त्वामिह आकारयति।

[ ततः प्रविशति विदूषको विनोदः। अनुप्रविशति च सहसखीजना पुरनर्त्तकी मदन्तिका। ]

प्रविश्य विनोदः। जयतु राष्ट्राधीश्वरः। एषोऽहम् सहसखीजनामार्य्यां मदन्तिकां त्वत्सकाशमुपानयामि।

सहसखीजना मदन्तिका। विजयतां महीपालः। नमोऽस्तु भवते। [ प्रणामं नाटयति ]।

विक्रमवर्द्धनः। स्वागतमार्य्यायां मदन्तिकायाः। स्वागतं चास्तु त्वत्सखीनाम्। [ वयस्यं प्रति ] बन्धो, स्वागतमस्तु भवतः। इहोपविश्यताम्।

विनोदः। [ उपविश्य ] धन्योऽस्मि राजप्रसादेन। किन्तु बन्धो, ज्ञातं मया यत् कार्य्यभारेण पीड्यसे, खिद्यसे च चिन्ताभारेण। अतस्तेऽवसादलाघवार्थमागच्छामि।

विक्रमवर्द्धनः। देदीप्यस्व प्रियवयस्यगुणगौरवेण। त्वामहं सादरं संवर्द्धयामि।

विनोदः। अलं विनयेन। साम्प्रतं प्रसाद्यतां मानसं गीतिश्रवणेन।

विक्रमवर्द्धनः। तथास्तु। विधीयतां यथाकर्त्तव्यं चित्तविनोदनाय।

विनोदः। ( सहर्षम् ) आर्य्ये मदन्तिके, परितोष्यतां नरेश्वरः। कलकण्ठोच्चारितगीतोपहारेण सम्मान्यतामत्रभवान् नरपतिः।

उपसृत्य मदन्तिकाः। विजयतां राज्येश्वरः। साम्प्रतं भवन्तमानन्दयामः।

सख्यश्च। जयतु जयतु वीरवर्य्यः। वन्दे भवन्तम्।

विनोदः। अये, मद्वचनमनुसृत्य सम्बोध्यतां यथायथं महामान्यो राज्याधिपः। उच्चार्य्यतां प्रशस्तिवचनं विधिपूर्वकम्।

मदन्तिका। तथास्तु। वाच्यतामत्रभवतो वन्दनावाक्यम्।

विनोदः। आरभ्यताम्। जयतु महामहिमोऽशेषगुणसागरः।

सहसखीजना मदन्तिका। जयतु महामहिमोऽशेषः—

विनोदः। आः। जयतु महामहिमाऽशेषगुणसागरः।

मदन्तिकादयः। जयतु महामहिमा…… ।

मदन्तिका। कष्टोच्चार्य्योऽयं दीर्घवचनोच्चयः। तत्संक्षिप्यतां धीमन् राजवन्दनवाक्यम्।

विनोदः। नहि नहि। कथं दुरुच्चार्य्यं भवति? एषोऽहं सङ्क्षेपेण वाचयामि। उच्यताम्—जयतु अशेषगुणसिन्धुः करुणासिन्धुर्विशालपुरेन्दुः…… ।

मदन्तिका। अहो, एतदपि कष्टोच्चार्य्यम्। तत् कृपया सरलीक्रियतांवाक्यम्।

विक्रमवर्द्धनः। अलमायासेन कल्याण्यः एतदेव पर्य्याप्तम्। ( मदन्तिकां प्रति ) देवि मदन्तिके, पृच्छामि तावद् भवत्सखीनां परिचयम्।

विनोदः। ( मदन्तिकां प्रति ) भोः, कथ्यन्तां नामधेयानि सहचरीणाम्।

मदन्तिका। उत्तमम् ( राजानं प्रति ) राजन्नेते मे सहचर्य्यः स्वयमेव परिचयमभिधास्यन्ति। ( सहचरीः प्रति ) अये, सम्मान्यतां महाराजो नामधेयोल्लेखेन।

विनोदः। उत्तमम्। सर्व्वाभिर्भवतीभिः पृथक्त्वेनामन्त्रयितव्यो भूपतिः।

मदन्तिकाः। ( सहचरीगणं प्रति ) शोभनमेतत्। भोः, पाल्यतामार्य्यवयस्यस्य वचनम्।

प्रथमसहचरी। तथास्तु, कथयामि। ( भूपतिमुद्दिश्य ) राष्ट्रेश्वर, तृष्णेति नामधेयमहं वहामि।

विनोदः । (सहर्षम्) तृष्णा, तृष्णा । तृष्णार्त्तः खलु निखिलो मानवः । विषयिणां विषयतृष्णा, लुब्धानामर्थतृष्णा, कृपणानां सञ्चय-तृष्णा, नारीणां भूषणतृष्णा, नृपाणाञ्च राज्यविस्तारतृष्णा,—एवं तृष्णैव सर्व्वत्र विलसति

मदन्तिका । साधु साधु ।

विनोदः । (सहर्षम्) अथ किम् । किञ्च, भोजनविलासिनामशनतृष्णा, रणलिप्सूनां संग्रामतृष्णा, शार्दूलानां शोणिततृष्णा, तथा कामिनां भोगतृष्णा, मुमुक्षूणां च मोक्षतृष्णा—एवं सर्व्वशक्तिमयीं सर्व्वत्र विजयिनीं तृष्णां नाम कः परिहर्त्तुं शक्नोति ?

सर्व्वाः सख्यः । साधु साधु ।

विनोदः । विजयन्तां भद्राः । एषा संसारमरुभूमौ प्लावयति धरातलं तृष्णा मायामन्दाकिनी । तदेषा विजयते प्रकामम् ।

विक्रमवर्द्धनः । (सहर्षम्) साधु साधु वयस्य ! मनोरञ्जने त्वं पुनो निपुणोऽसि । यातु । अपराश्चैताः स्वनामधेयानि कीर्त्तयन्तु ।

विनोदः । (मदन्तिकासहचरीगणमुद्दिश्य) वाढम् । भोः, सम्मान्यतां भूपालः परिचयप्रदानेन ।

(मदन्तिका सहचरीगणाय सङ्केतं नाटयति)

द्वितीया सहचरी । नाम्नाहं मोहमयी । परमकिञ्चनाहं सकलङ्कमनादृता ।

विनोदः । साधु साधु । मोहमयं खलु निखिलभुवनम् । सर्व एवात्र मोहान्ध-कारे स्वप्नं पश्यन्ति । किन्तु कथमकिञ्चनासि त्वम् ? त्वं हि साम्राज्येश्वरमपि विभ्रामयसि । तज्जयोऽस्तु ते । अथापरा परिचयं कथयतु ।

तृतीया सहचरी । नाहं मनोरमनामधारिणी । सर्व्वे मां वह्निशिखेति आह्वयन्ति ।

विनोदः । अहो, मनोहरं नामाभिधानम् । यतः सर्व्वतः प्रज्ज्वलन्ति प्रभाजालेन वह्निशिखाः । कनकारुणानलशिखा भुवन-

मालोकयति, विनाशयत्यन्धकारम्। सन्ध्यायां निशीथकाले च प्रतिकक्षम्, मन्दिरे राजनिलयेषु च वह्निशिखाया विजयोत्सवः।

मदन्तिका। (सहर्षम्) ततस्ततः?

विनोदः। नयनरञ्जिनी विभावरीमहिमवर्द्धनकरी संहारकारिणी चैषाग्निशिखा सर्वत्र दीप्यते।

विक्रमवर्द्धनः। कथ्यतां कथ्यताम्। अपूर्व्वोस्ते वाग्विन्यासः पण्डितानपि पराजयते, प्रमोदयति चास्माकं चेतांसि। तेनैव प्रियोऽसि त्वम्।

विनोदः। गुणमणे, तवानुग्रह एव मां धन्यीकरोति। कथ्यते च—मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिमित्यादि।

विक्रमवर्द्धनः। सखे, मूकस्त्वं यदि वाचालीक्रियसे, किन्तु पङ्गुत्वं न पश्यामि। तत्कथमेवं सिध्यति?

विनोदः। राजन्, त्वदीयप्रणयविमुग्धोऽहं न कुत्रापि इतो गच्छामि। नास्ति मेऽपरं कृत्यं न वास्ते अन्या गतिः। तेनाहं तत्सन्निधौ नित्यावस्थानादन्यत्र गमनाशक्तत्वाच्च पङ्गुप्रायः सञ्जातोऽहम्।

मदन्तिका। (विहस्य) अतो भवता राजान्तिकं न त्यज्यते।

[मदन्तिकादयो गायन्ति]

गानम्

कुसुमकुञ्जे पिको गायतु गानम्।
निद्रिततरुवीथिर्मुञ्चतु ध्यानम्।
गायतु मधुकरः
हसतु कनककरः
अपरूपमण्डनं विलसतु भुवनं वादय मधुतानम्।
नृत्यविलासैः सफलय जीवनं विरचय सुखगानम्॥

विनोदः । (सहर्षम्) मधुरं मधुरम् ।

विक्रमवर्द्धनः । सुललितमिदं सङ्गीतकम् । एतच्च मनो हरति । किन्तु सखे, अधुना न पुनरस्ति प्रयोजनं गीतिविलासेन । यतोऽधुना प्रारभ्यते समराभियानम् ।

विनोदः । तर्हि किं करणीयम् ? आदिश्यतामत्रभवान् ।

विक्रमवर्द्धनः । सखे, अधुना कर्त्तव्यो जनमानसेषु उद्दीपनासञ्चारः । तेन प्रमोदविलासं परिहाय क्रियतां ज्वालामयः समरोल्लासोऽग्निगर्भवाक्यप्रचारेण ।

विनोदः । (मदन्तिकां प्रति) देवि, प्रतिपाल्यतां राजादेशः ।

(मदन्तिकादयो गायन्ति)

गानम्

अग्निवीणां वादय सखि अग्निज्वालामालिनि ।
गाहि दीप्त प्रलयगानं भुवनमनोहारिणि ॥
परिहर सुखललितहास्यं
लसतु मत्तोचण्डलास्यं
ध्वनतु अस्त्रैर्भीमशिञ्जन वज्रदीपकरागिणी ।
बोधय नवजीवनमन्त्रं रुद्रनिलयचारिणि ।
जय रक्तकमलवासिनि ॥

इति द्वितीयाङ्के तृतीयं दृश्यम् । समाप्तो द्वितीयोऽङ्कः ।

—o—

## तृतीयोऽङ्कः

### [ प्रथमं दृश्यम् ]

( गन्धर्व्वनगरवनपथः—गन्धर्व्वराजकुमारी मधुच्छन्दा सखीद्वयसहिता विचरति। विहगाः कूजन्ति। वालानां करेषु पुष्पकरण्डिकाः। )

मधुच्छन्दा। ( सखीद्वयं प्रति ) हले, दृश्यताम्। कुसुमिता वनस्थली नयनं रञ्जयति।

कलस्वना। सखि, तारुण्यं सर्व्वमेव मनोरमं पश्यति। तेन त्वमपि स्वभाव-मनोरमा नवोद्भिन्नयौवनलावण्येन काननशोभामधिकतरं वर्द्धयसि। ( मधुच्छन्दा व्रीड़ां नाटयति )

मधुपर्णा। युक्तं कथयति सखी। ( मधुच्छन्दां प्रति ) राजपुत्रि, सत्यं वदामि। विधाता तुभ्यमतुलनीयामङ्गशोभां ददाति स्म। तेन मूर्त्तिमती वनलक्ष्मीरिव विचरन्ती त्वं देवानामपि मनो हरसि, का कथा मर्त्यानाम्? ( मधुच्छन्दा सादरं सखीं करेण मृदु ताड़यति। )

कलस्वना। ( मधुपर्णां प्रति ) सखि, न केवलमेतत्। अस्माकं प्रियवान्धवी गुणमहिम्ना सर्व्वेषां हृदयं जयति। एषा हि प्राणलक्ष्मी-र्गन्धर्व्वनगरस्य।

मधुच्छन्दा। ( सहर्षम् ) अयि, धन्या यूयं जानीथ मनांसि रञ्जयितुं प्रिय-जनानाम्। तद् यथाकालं प्रप्स्यथ हृदयवल्लभप्रसादम्।

कलस्वना-मधुपर्णे। ( उच्चैर्विहस्य ) एषा त्वमात्मनो हृद्गतं कथयसि। एवमात्मनो मनोभावम् अस्मासु आरोपयसि।

मधुच्छन्दा। अयि, आस्तां तावत्। सुखालापप्रसङ्गेन विस्मृतोऽस्माभिः मुख्यसङ्कल्पः। तद् देवार्च्चनार्थं कुसुमानि चीयन्ताम्।

कलस्वना। अहो, विस्मृता वयं कृत्यजातम्। तदत्र प्राचुर्य्येण विचित्र-वनपुष्पाणि प्रस्फुटितानि। तच्चिनुमः सानन्दम्। ( चिनोति )

मधुपर्णा । अहमपि सुरभिकुसुमानि आहरामि । ( पुष्पाहरणं करोति )

मधुच्छन्दा । अहमाभिर्वनमल्लिकाभिर्मनोहरं माल्यं विरच्य उमामहेश्वरमर्च्चयिष्यामि ।

कलस्वना । ( सहर्षम् ) सखि, अम्लानवनपुष्पैरपरां मालिकां विरचय ।

मधुपर्णा । ( पुलकोत्फुल्ला ) कथं सखि, पुनरन्यमाल्येन प्रयोजनम् ?

कलस्वना । यदि दैवकृपया भवति सौभाग्योदयस्तर्हि प्रथमप्रियसमागमे वाञ्छितजनार्च्चनार्थं सम्भवेत् प्रयोजनं सुगन्धिमाल्येन ।

( मधुपर्णा हसति )

मधुपर्णा । आनन्दः, आनन्दः । सफलं भवतु पुष्पाहरणम् ।

मधुच्छन्दा । ( कृत्रिमकोपेन ) नाहमत्र तिष्ठामि । आहरिष्यामि कुसुमानि वनान्तरात् । ( कतिपदान् गच्छति )

कलस्वना । ( द्रुतं राजकन्याया हस्तं धृत्वा ) कथं कुप्यसि प्रियसखि ? एषा वयमानन्दमाचरामः ।

मधुपर्णा । ( राजपुत्रीमुद्दिश्य ) अये, मा कुरु रोषम् । एतद्धि कौतुकमात्रम् ।

( कलस्वनामुद्दिश्य ) किन्तु सखि, वयमिह दूरमागताः । ( राजपुत्रीं प्रति ) तत्सखि न खलु कालक्षेपः करणीयः ।

मधुच्छन्दा । हा धिक् । काननशोभादर्शनेन विमुग्धा वयं दूरतरमागताः । तदविलम्बेन नन्दनसरोवरः प्रापणीयः । ततस्तु तत्र अभिषेकान्ते उमामहेश्वरदर्शनं कार्य्यम् ।

कलस्वना । अहो सत्यम् । वयं दूरमागताः । मन्ये वेला च वर्द्धते इति ।

मधुच्छन्दा । तत् प्रियसख्यौ, द्रुतं प्रचल्यताम् ।

मधुपर्णा । तथास्तु । अस्माभिस्त्वर्य्यते । ( राजपुत्रीं प्रति ) किन्तु सखि, अद्यैव देवसकाशेऽभिमतवरः प्रार्थनीयः । मा खलु विस्मरैतत् ।

कलस्वना । वयमेव प्रार्थनां करिष्यामो यथा प्रियसख्या इष्टलाभो भविष्यति ।

मधुच्छन्दा। (सलज्जम्) अहमेव युष्मत्कृते भगवते उमामहेश्वराय प्रार्थनां निवेदयिष्यामि।

[सर्व्वा आनन्दकोलाहलेनान्तर्द्धानं कुर्व्वन्ति। प्रविशति चान्यपथेन धनुर्व्वाणधारी मृगयावेशः सनातनो विजयकेतुः]

प्रविश्य विजयकेतुः। अहो, सुगभीरमिदमरण्यम्। न श्रूयतेऽत्र मनुष्यकण्ठस्वरः।

सनातनः। राजन्, केवलं झिल्लीरव एव निस्तब्धामिमां वनभूमिं मुखरीकरोति।

विजयकेतुः। किन्तु, कुत्रास्माकमनुचराः? (सनातनं प्रति) सनातन, किं तावदस्मदनुचरा दूरे तिष्ठन्ति?

सनातनः। राजन्, मन्ये, ते मृगमनुसरन्तो दिग्भ्रमेण दूरं प्रचलन्ति।

विजयकेतुः। अन्वेष्टव्या हि स्वजनाः। तद् बन्धो, अन्वेषयास्माकमनुचरान्। नो चेद् विच्छिन्नानामस्मज्जनानामनर्थो भवेत्।

सनातनः। इतः पश्यामि तावत्। त्वमत्र तिष्ठ यावदहं पुनरागच्छामि। (अन्तरालं गत्वा उच्चैः) भो भो अनुचरा, आगच्छत आगच्छत। अत्र महाराजस्तिष्ठति।

सनातनः पुनः प्रविश्य। न हि आगच्छति प्रत्युत्तरः। तद् राजन्, एकाकिना भवता न हि भविष्यति सन्धानं स्वजनानाम्। तदुभावेव यतिष्यावहे।

विजयकेतुः। उत्तमम्, तत्पुनराकार्य्यतामुच्चैःस्वरेण व्यवहिताननुचरान्, यथा ते कथमपि श्रृणुयुरस्माकमुच्चघोषम्।

सनातनः। तदेव करोमि। (उपसृत्य) भो भो देवस्थानराजानुचराः, वयमिह तिष्ठामः। तदागम्यतां शब्दानुसारक्रमेण।

(कोऽपि न यच्छति प्रत्युत्तरम्। निर्गच्छति कश्चित् पान्थवेशी)

प्रविश्य पान्थवेशी दस्युः। के यूयं महाभागाः? कानाह्वयत?

विजयकेतुः। वयं देवस्थानादागच्छामः। परिजनाश्च पथि भ्रमेणान्तरिताः।

सनातनः। (पान्थवेशिनं प्रति) अयं हि अस्मन्महाराजो मृगया प्रसङ्गेनात्र समागच्छन्ननुचरेभ्यो विच्छिन्नः। अतस्तान् विच्छिन्नान् स्वजननानुसन्दधामः।

पान्थवेशी। (कपटहास्येन) भद्र, इदं हि गन्धर्व्वनगरान्तर्गतं काननम्। अत्र राजपरिजना विहरन्ति, गच्छन्ति चानेन पथा पावन—सुमामहेश्वरमन्दिरमर्च्चनाप्रयोजनेन।

विजयकेतुः। अज्ञातोऽयमस्माभिर्गहनप्रदेशः। तत्कृपया प्रदर्श्यतां वहिर्गमनपथो विश्रामलाभाय।

सनातनः। भद्र, प्रदर्शयास्मान् निर्गमपथं, येन नगरमुपगच्छामः।

पान्थवेशी। (कियद्दूरमानीय) पश्यन्तु भवन्तः पुरोवर्त्तिनं नगरगमनमार्गम्। तत्र च भवतां परिजनसमागमो भवेत्। (निष्क्रान्तः)

विजयकेतुः। सनातन, आगम्यतामितो मार्गेण। शरणीयञ्चाश्रयस्थलम्।

सनातनः। राजन्, न विश्वसनीयोऽज्ञातशीलो जनः। यतश्छलयेदसौ कापट्येनापरिचितान्। तदित एव प्रचलितव्यम्। (प्रचलति)

विजयकेतुः। यद्भवत्, भवतु तत्। अत्र पर्य्यटनाल्लोकालयप्रदेश आश्रितव्यः।

[ निस्तब्धगभीरे वने विहगाः कूजन्ति ]

[ नेपथ्ये वंशी ध्वनति। सहसखीजना मधुच्छन्दा करुणमावेदयति ]

सख्यौ। (नेपथ्ये) रक्ष रक्ष दस्युकवलात्। रक्ष रक्षानाथवालिकाजनान्।

[ पान्थवेशी नेपथ्ये—तत् सहचराश्च कुर्व्वन्ति अट्टहासं—हाः हाः हाः। ]

नेपथ्ये मधुच्छन्दा। मुञ्च मुञ्च। रक्ष माम्, रक्ष माम्।

नेपथ्ये पान्थवेशी दस्युपतिः। हाः हाः हाः [ अट्टहास्यं करोति ] को नु त्रास्यते? किञ्च, कथं विभेसि? आगच्छ आगच्छ।

मधुच्छन्दा। [ करुणकातरकण्ठेन ] अहो, दस्यवोऽस्मानपहरन्ति। कोऽस्ति रक्ष रक्षानाथाम्।

विजयकेतुः। [ आकर्ण्य क्रोधोद्दीप्तो धावन् ] आः को हि पाषण्डोऽविनयमाचरति बालिकासु ? रे रे दुर्वृत्ताः, मृत्युं वः प्रापयामि। [ सरोषमन्तर्गच्छति ]

नेपथ्ये दस्यवः। मारयत मारयत वैदेशिकम्।

[ कोलाहलः ]

नेपथ्ये विजयकेतुः। [ उच्चैः ] मृत्युं गच्छत दुष्टाशयाः। तद् रे रे दुराचारा, एषोऽहं वो विनाशयामि।

[बाणं क्षिपति—प्रचण्डबाणपतनशब्दो ध्वनति, भवति च कोलाहलः। ]

नेपथ्ये पान्थवेशी। आः, प्रचण्ड आघातः—गतोऽस्मि [ सशब्दं भुवि पतितः]

अन्ये दस्यवः। निहतो दलपतिः—निहतो दलपतिः—प्रचलत प्रचलत।

[ कोलाहलपूर्व्वकं पलायन्ते। ]

[ पटपरिवर्त्तनम्—मूर्च्छिता राजकन्या शयाना—सख्यौ विलपतः—"कथमेनां जीवयामः" ? ]

[ ततः प्रविशन्ति सपदि सरवं सनातनादि राजसहचराः।

सनातनः। [ सहचरानुद्दिश्य ] एषा दस्युभिराक्रान्ता बालिका मूर्च्छां गता। तदेताः अस्माभिः सयत्नं रक्षणीयाः बालिकाः।

सख्यौ मधुपर्णा-कलस्वने। अहो महाभाग, कथं प्रियसखीमुज्जीवयामः ?

[ प्रविशति विजयकेतुः ]

प्रविश्य विजयकेतुः। अलं भयेन कल्याण्यः। अनतिविलम्बेनेयं युष्मत्सखीसुस्थतां लप्स्यते। [ अनुचरान् प्रति ] भोः क्रियतां प्रचेष्टाऽस्याः संज्ञालाभाय। सनातन, विधेहि कर्त्तव्यम्।

सनातनः । अलमुद्वेगेन राजन् । एते वयं यथोचितं साधयिष्यामः । [ अनुचरानुद्दिश्य ] भो आनीयतां सलिलं निर्झरात्, बीजनञ्चास्याः सुस्थतार्थं करणीयम् ।

[ अनुचरा नेपथ्यं गत्वा जलं व्यजनार्थं तालपत्रादिकमानीय प्रयच्छन्ति । सख्यौ च सुश्रूषणमारेभेते । ]

सनातनः । उत्तमम् । क्रियतामस्याः शिरसि नीरसेकः । व्यजनसञ्चालनेन चास्याः संज्ञालाभो भविष्यति ।

विजयकेतुः । [ स्वगतम् ] भाग्येनात्र वयं सम्प्राप्ताः—मिलिताश्च परिचरैः ।

सनातनः । राजन्, बालिकानामार्त्तनादमनुसृत्याभिधावन् दैवकृपयाऽदूर एव सहचरैर्दृष्टो द्रुतं सगणस्त्वया सह सम्मिलितः । ततश्च त्वया समाक्रान्तो निहतो दस्युपतिः ।

विजयकेतुः । [ सहर्षम् ] मारितोऽसौ दुराचारः । तदलं शङ्कया ।

मधुपर्णा-कलस्वने । [ राजानमुद्दिश्य ] अहो, कल्याणमस्तु महात्मनाम् । तन्महाभाग, अधुना रक्षिता वयं भवतामौदार्य्येण ।

विजयकेतुः । विश्राम्यतामत्रभवतीभिर्निरुद्वेगेन । नूनमचिरेणैव भयमूर्च्छितेयं सुस्थतां प्राप्स्यति ।

सख्यौ । अहो धन्या वयम् ।

मधुच्छन्दा । ( नयनयुगलमून्मील्य क्षीणकण्ठेन ) विजयतां भगवान् उमामहेश्वरः ।

( सर्व्वान् अवलोकयति )

कलस्वना । सखि, माऽस्तु भयम् । रक्षिता वयं मङ्गलमयस्य प्रसादेन ।

मधुपर्णा । अहो, विजयते महात्मनां करुणा ( नृपादीनवलोकयते )

विजयकेतुः । भद्राः, अधुना निःशङ्का यूयम् । वयमपि कर्त्तव्यसाधनेन कृतार्थाः, तदिदानीं स्वस्थेन मनसा स्वस्थानं गन्तुमर्हथ । अथवा कथ्यन्तां कृपया किमस्माकमन्यत् करणीयमस्तीति ।

(राजकन्या मधुच्छन्दा धीरमुत्थायासीना सख्योः कर्णयोः किमपि कथयति ।)

कलस्वना । महाभाग, चिरस्मरणीयं भवति भवतां कारुण्यम् । तेन सविनयं कृतज्ञतां वो विज्ञापयामः । जयोऽस्तु भवताम् । किञ्च, यावन्नाप्नोति स्वभवनं प्रियसखी, तावन्नेच्छामो भवतो विसर्ज्जितुम् ।

मधुपर्णा । अतः कृपया प्राप्यतां स्वभवनमत्र प्रियसखी भवद्भिरस्माभिः सहगमनेन ।

कलस्वना । महाभागाः, अभिलषामो भवतां शुभसङ्गतिमस्माकं निरापत्ता-रक्षणाय ।

सनातनः । अलं शङ्कया भद्रे । एते वयं सर्व्वथा भवतीनां सहाया भविष्यामः ।

मधुपर्णा । (सहर्षम्) साधु साधु वीराः । अस्मत्प्रभुं गन्धर्व्वनाथं ज्ञापयिष्यामो भवतामनुग्रहमाहात्म्यम् । स खलु भवतः सबहुमान-मभ्यर्थयिष्यन्ति । तद् गृह्यतामस्मदामन्त्रणं कारुण्येन ।

विजयकेतुः । धन्याः स्म भद्रा विनयेन । सम्मानयिष्यामो गन्धर्व्वनाथम् । किञ्च निर्विघ्नं सम्प्रापितासु स्वभवनं भवतीषु, भगवन्तमुमा-महेश्वरं द्रष्टुं सकामाः वयम् । तद् आरभ्यतां शुभयात्रा सुखेनेप्सितसाधनाय ।

सख्यौ। विजयतां महावीर। एते वयं प्रचलामः।

राजानुचराः। जयोऽस्तु सुचरितानाम्।

(सर्व्वाः प्रचलन्ति)

इति तृतीयाङ्के प्रथमं दृश्यम्।

[द्वितीयं दृश्यम्]

[गन्धर्व्वराजभवनम्—अलङ्कृतायां विवाहसभायां समवेता विभिन्नराज्याधिपाः रत्नासनलङ्कुर्व्वन्ति—गन्धर्व्वराजश्चित्रभानुर्गुरु ब्रह्मानन्दभारती सम्बोध्य श्रद्धांज्ञापयति।]

चित्रभानुः। [ब्रह्मानन्दं प्रति] भगवन्, अद्यास्मिन् मङ्गलोत्सवे अस्मच्छुभार्थिनं परमगुरुमशेषज्ञानप्रेमगरिष्ठं भवन्तमर्च्चयामि।

[अर्घ्यं निवेदयति, ध्वनित च मङ्गलशङ्खः।]

ब्रह्मानन्द भारती। स्वस्ति गन्धर्व्वनाथाय। राजन्, दैवोऽयं निर्व्वन्धो विधातृच्छया शुभाय सम्पद्यते। अतोऽद्य कुमार्य्यां मधुच्छन्दया श्रीमती विजयकेतोः शुभविवाहे स्वस्तिं वाचयामि।

समवेत राजानः। स्वस्ति स्वस्ति।

चित्रभानुः। [कृताञ्जलिः] भगवन्, धन्योऽहं भवत आशीर्व्वादलाभेन। तेन सार्थकमस्तु चैतच्छुभानुष्ठानं भवतां समागमेन।

ब्रह्मानन्दः। भद्रमस्तु। श्रेयोऽस्तु प्राकाम्यन। तद् गन्धर्व्वेश्वर, आमन्त्रन्तामधुना राजन्यवर्य्याः शुभाशंसनाय।

चित्रभानुः। [नृपानुद्दिश्य] माननीया भूपालाः, तनया विवाहप्रसङ्गेनाद्य भवतोऽहं सश्रद्धमामन्त्रये।

राजानः। तथास्तु, तथास्तु सफलमस्तु कन्यादानं सर्व्वेषां सुखाय।

पारिषदाः। विजयतां गन्धर्व्वपालः। चिरं जीवेतां नवदम्पती सौख्य-

विभवेन ।

चित्रभानुः । ( ब्रह्मानन्दभारतीं प्रति ) देव, तत् प्रथममुद्गच्छतु भवदीय-पावनकण्ठादेव शुभाशंसनवचनं दम्पत्योः कल्याणाय ।

ब्रह्मानन्दः । ( विजयकेतुमुद्दिश्य ) श्रीमन् विजयकेतो, एषा गन्धर्व्वराज-कन्या मधुच्छन्दा अचिन्तनीय-दैवविधानेन त्वया दस्युकवलात् परिरक्षिता । किञ्चेयं सर्व्वगुणसम्पन्ना सुचरिता च विधि-विधानेनाशेषगुणशालिनस्तव पत्नी भवितुमर्हति । अतो युवामहं शुभवचनेन संवर्द्धयामि ।

सर्व्वे । जयतु जयतु विधिविधानम् । सर्व्वं शुभाय भवतु ।

चित्रभानुः । (विजयकेतुमुपगम्य) आयुष्मन्, गन्धर्व्वनगरेण सार्द्धं देवस्थानस्य चिरमैत्री विद्यते । आसीच्च तव जनकेन सार्द्धमस्माकं प्रगाढ़ं सौहृदम् । तदिमामनर्घरत्नकल्पां मम तनयामशेषगुण-शालिने तुभ्यमहं सम्प्रददे ।

पार्षदाः । ( सहर्षम् ) साधु साधु । सफलमस्तु सुखानुष्ठानम् ।

( राज्ञी चित्रलेखा समुपगम्य चन्दनेन जामातुर्ललाटमङ्कयति, सम्बोधयति च जामातरम् )

गन्धर्व्वराजपत्नी चित्रलेखा । ( विजयकेतुं प्रति ) श्रीमन्, दिव्यस्नेहानुसिक्तं मे मातृत्वं त्वामद्य जामातृगौरवेण सम्वर्द्धय पुत्रत्वेन गृह्णाति । अतस्त्वं चिरनिरामयोऽशेषगुणगरिममण्डितः सपत्नीकोऽस्मा-कमानन्दकरो भव । ( आशिषं करोति ) ( ध्वनति च मङ्गलशङ्खः )

ब्रह्मानन्दः । तथास्तु । विजयतां विधातृनिर्वन्धः । ( राजानं प्रति ) राजन्, आनीयतां कनकरत्नमौक्तिकसमलङ्कृता गुणवती तनया सम्प्रदानाय । करोमि साम्प्रतं नवदम्पत्योः शुभं करवन्धनम् मन्त्रोच्चारेण ।

( राजा पत्नीं कृत्यं निर्दिशति—उलुरवपुरःसरं प्रविशति सहसखीजना वधूवेशालङ्कृता कुमारी मधुच्छन्दा—सखीनां करेषु शोभन्ते च स्वर्णपात्रस्थ-कुसुममाल्य-कुङ्कुमचन्दनपात्रादि मङ्गलद्रव्याणि—ज्वलन्ति पुरतो धूप-दीपमालिकाः ।

कलस्वना । ( मधुच्छन्दाया हस्ते पुष्पमालिकामर्पयति )—गृह्यतां राजनन्दिनी वरमालिका । वरयस्व पतिदेवम् ।

[ मधुच्छन्दा सखीहस्तान्माल्यं गृहीत्वा पतिं प्रणम्य तत्कण्ठे वरमाल्यमर्पयति । मधुपर्णा स्वर्णपात्रस्थ-कुङ्कुमचन्दनपात्रं राजपुत्र्याः करेऽर्पयति । मधुच्छन्दा च वरस्य ललाटे तिलकं ददाति । विजयकेतुश्च स्वकीय-रत्नहारं कण्ठादुन्मोच्य राजपुत्र्याः कण्ठं भूषयति, ददाति वधूललाटे शुभतिलकम् कुङ्कुमेन—ध्वनति चोलुरवसहितो मङ्गलशङ्खनादः ।

चित्रभानुः । ( विजयकेतुमुद्दिश्य ) वत्स, गृह्यतामेषा मे गुणवती तनया धर्म्मपत्नीत्वेन । साहचर्य्येणास्याः धर्म्माचरणेन सुखगार्हस्थ्यसाधनेन च चिरं मोदस्व, प्रतिपद्यस्व सुविमलामक्षयकीर्त्तिं वीरधर्म्मपालनेन ।

[ राजा कुमारस्य हस्ते कन्यामर्पयति, विजयकेतुश्च अवनतशिराः युक्तपाणिः श्रद्धां निवेदयति । ]

चित्रलेखाः । ( नवजामातरमुपगम्य शिरसि शुभाशिसं विधाय ) तात, इयं ते जन्मान्तर पुण्यप्रणयसंबद्धा धर्म्मपत्नी त्वामिह संप्राप्ता । तद् गृहाण भार्य्याम् । नन्देतां चातःपरं भवन्तौ चिरसौख्येन ।

ब्रह्मानन्दः । ( करमुत्तोल्य ) स्वस्ति स्वस्ति । सर्व्वं भद्राय भवतु ।

[ विजयकेतुः श्वशुरं श्वश्रूञ्च प्रणमति—मधुच्छन्दा च वन्दते पितरौ । ]

चित्रभानुः । ( विजयकेतुं प्रति ) चिरं जीव तात । वर्द्धस्व गुणगौरवेण ।

( कन्यां प्रति ) वत्से, सुचिरायुष्मती भव, मोदस्व शश्वत् स्वामिसौभाग्येन।

चित्रलेखा। ( कन्याजामातरौ संवर्द्धयति ) सुखमस्तु श्रीमन्। जयोऽस्तु ते। ( जामातरं नन्दयति ) ( कन्यां परिष्वज्य ) देदीप्यस्व जाते चिरसौभाग्येन। अनिन्द्यचरितासि त्वं, नन्दयोभयकुलं चारित्रमाहात्म्येन।

चित्रभानुः। ( कन्याजामातरावुद्दिश्य ) अतः श्रीमन्, वन्द्यतां मूर्त्तमङ्गलविग्रहोऽत्रभवान् गुरुपादो ब्रह्मर्षिः। ( विजयकेतुः प्रणमति )

ब्रह्मानन्दः। ( कुमारं प्रति ) धीमन्, अतः सपत्नीकः स्वराज्यं प्रतिगम्य पालय राजधर्म्मं प्रेम्णा, त्यागेन च वीर्य्येण। लभस्वाक्षयजयमाल्यं सपत्नानां विनाशेन, प्रजानां च सुखविधानेन। ( मधुच्छन्दां प्रति ) कल्याणि, आशिषं ते ददामि। अतःपरं राजलक्ष्मीस्त्वं राज्येश्वरि, प्रतिपालय दीनानन्नदानेन, प्रतिपालयानाथान्, प्रयच्छ स्नेहाश्रयमशरणेभ्यः। किञ्चान्नपूर्णेव देशलक्ष्मीर्देशमातरं प्रपूजय प्रजानां मङ्गलविधानेन। ( राजानमुद्दिश्य ) तद् गन्धर्व्वपाल, अधुनाहं पूर्णमनोरथान् भवतोऽभिनन्द्य स्वमाश्रमं गमिष्यामि। भद्राणि चातो युष्माकं बाहुल्येन भवन्तु। ( निष्क्रान्तः )

चित्रभानुः। विजयन्तां महर्षिपादाः। गुरुजनानामाशिष एव मम शरणम्।

सर्व्वे ( सहर्षम् ) विजयतां गन्धर्व्वेश्वरः।

अन्ये। जयतु कुमारो विजयकेतुः। जयतु राजनन्दिनी मधुच्छन्दा।

[ चित्रलेखा सहर्षमुपसर्प्य जामातरं कन्याञ्च सादरं गृहीत्वाऽभ्यन्तरं गच्छति। ध्वनति च उलुरवसहितः शङ्खनादः।

चित्रभानुः। ( पुरतः सञ्चरन् ) अहो, समाप्तकृत्योऽहं निर्वृतोऽस्मि। अधुना भवतु चास्मन्मनसो विश्रामः।

एषोऽहम्—गङ्गाम्भसा यथा गङ्गां हृत्पद्मैर्हृदयेश्वरम् ।
तनया रत्नदानेन पूजयामि तथा वरम् ॥
तत् प्रसीदतु सर्व्वथास्मासु भगवानुमामहेश्वरः ( सभां त्यजति )

( उत्तिष्ठन्ति च गमनार्थं सर्व्वे पारिषदादयः )

इति तृतीयाङ्के द्वितीयं दृश्यम् ।

## चतुर्थोऽङ्कः

### प्रथमं दृश्यम्

[ देवस्थानराजपथः—राजकविः सुधाकण्ठो वीणया गायति गानम् ]

सुधाकण्ठो विचरन्— ललितकाव्यकलाकुसुमोद्भवं
विगलितं सुरलोक-सुधोपमम् ।
पिवत दुःखहता मनुजा द्रवं
मधुमयं हृदयैकरसायनम् ॥

[ प्रविशति यन्त्रविज्ञानविद् विश्वचित्रः ]

विश्वचित्रः । भो विरम विरम । नातः परं प्रयोजनं काव्यानुशीलनेन ।

सुधाकण्ठः । भद्र, किं कथयसि ? न किमस्ति प्रयोजनं मर्त्यानां दिव्यानन्दास्वादनेन ? तत् किमिदानीं निःशेषितं ललितकलाप्रयोजनमस्माकं जीवनेषु ?

विश्वचित्रः । ( उच्चैर्हसन् ) अहो, उपहासकरं भवतो वचनम् । किं काव्यचर्च्चा बुभुक्षूणामन्नसंस्थानं विधास्यति ? अस्माभिस्तु दृश्यते एष ललितरसविलासो न खलु दारिद्र्यं विदूरयति, न वा जीवनसमस्यानां समाधानं विदधातीति ।

सुधाकण्ठः । भ्रातः, सामग्रिकजीवनविषयस्तु नैकदेशतो विचारणीयः । पश्य, केवलमन्नवस्त्रादिकं वित्तं वा नैव सर्व्वम् । यतस्तेषां प्राचर्य्येणापि सर्व्वाङ्गीन-प्रयोजनं न सिध्यति ।

विश्वचित्रः। कथं न? भोग्यवस्तूनां प्राचुर्य्येणैव जीवनं सुखकरं भवति। अतोऽन्नवस्त्रादिकमेव मुख्यतः प्रयोजनीयम्।

सुधाकण्ठः। मित्र, नैतत् सम्यगुच्यते। केवलमन्नवस्त्रादि संस्थानेनैव न सर्व्वं परिसमाप्यते। अस्ति खल्वन्यत् प्रयोजनं परिपूर्णतार्थं जीवनस्य।

विश्वचित्रः। हसामि तावत्ते वचनेन। किमर्थादिकमन्तरेण महत्तर-प्रयोजनमस्ति जीवनेषु?

सुधाकण्ठः। भ्रातः, प्रयोजनमस्ति नूनमानन्देन। आनन्द एव जीवनम्। स हि प्रसादयति चित्तं, परिपूरयति शून्यतां हृदयस्य, विकाशयति च जीवनं सर्व्वभावेन। रससाहित्यानुशीलनेन स एवानन्दः स्फुरति। जीवयति च रसानुभावो मानवात्मान-ममृतस्पर्शेन।

विश्वचित्रः। किन्तु महाभाग, यन्त्रविज्ञानप्रसादाद् धनधान्यसमृद्धिर्भवति। अनेन विज्ञानप्रसादेन सम्भवति दारिद्र्यनाशो भवति चोप-करणप्राचुर्य्येण सुखकरो जीवनविलासः।

सुधाकण्ठः। भ्रातरेतत्ते वचनमंशतः सत्यमेव। किन्तु प्रचुरभोगविलास-द्रव्येणापि न भवति समाधानं सामस्तिकजीवनस्य। कुतो नु तृप्तिर्भोगवाहुल्येनापि? किमुपकरणप्राचुर्य्याणि अमल-शान्तिसौख्यमानयन्ति जीवनेषु?

विश्वचित्रः। नाहमवगच्छामि भवतो युक्तिम्। यदि वित्तान्नवस्त्रादिना स्वाच्छन्द्यलाभो भवति, भवति चार्ज्जितधनेन भोगविलाससुख-प्राचुर्य्यं, तदा को हि वानन्दस्यान्तरायः?

सुधाकण्ठः। भद्र, विचार्य्यतामेतत्। यदि स्वजनवियोगो भवति, रोगेण, शोकेन, सुहृदां मनोमालिन्येन, आत्मजनविच्छेदैरन्येषां प्राति-कूल्येन, हिंसाचरणेन, किंवा बहिःशत्रुभिः स्वदेशाक्रमणजनित-विविधदुर्विपाकेनापतन्ति दुःखशतानि, तदा किमन्न-वस्त्र-

सुखविलासैरपि सौख्यमुपजायते मर्त्यानाम् ? तदा क्व नु शान्तिः कुतो वा मनसः प्रसादः ? अत आनन्देनैव प्रयोजनमस्ति पुष्कलं जीवनेषु ।

[ प्रविशति दार्शनिकः सनातनः )

सनातनः । केयं वितण्डा ? पश्यामि, प्रस्फुरति चानर्गलः कविकण्ठ इति । तत् कवे, किं कथयसि ?

सुधाकण्ठः । ( सहर्षम् ) अहो भाग्येन वन्धुः समायातः । सनातन, त्वं दर्शनशास्त्रे भवसि निष्णातः । अतो विचार्य्यताम् । एष कथयति, अन्नवस्त्रवित्तविलासा एव जीवनं पूरयन्ति । अन्नवस्त्रधनादीनि च विज्ञानस्यैव दानमिति ।

सनातनः । ( हसन् ) मूढ़प्रजल्पितमेतत् । ( विश्वचित्रं प्रति ) भद्र, अन्नवस्त्रविलासप्राचुर्य्येणापि विविधकारणैर्नरा विषीदन्ति । पीड़ितस्य धनिनो नास्ति सौख्यम् । प्रवञ्चितस्य, शत्रुभिः प्रपीड़ितस्य, भयार्त्तस्य, दस्युभिरपहृतसर्व्वस्वस्य, शोकार्त्तस्य, किंवा राष्ट्रविप्लवसमरादिविपर्य्यस्तस्य, निर्व्वासितस्य प्राणभयाद् राजरोषाद् किंवा वहिःशत्रुभिः स्वदेशाक्रमणाद्धेतोः सन्त्यक्तवास्तुभूमिकस्य च कुत आनन्दः ? क्व वा शान्तिः ? का वा जीवनस्य निरापत्ता ?

विश्वचित्रः । तत् किं भवान् वक्तुमिच्छति ?

सनातनः । अहं वदामि सौम्य, यद् विद्यानुशीलनं नित्यानित्यविचारः, ज्ञानचर्च्चाध्यात्मचिन्तनञ्चेति प्रसादयन्ति मानसमिति । काव्यकलानुशीलनेन ललितकलापरिसेवनेन भागवतानुध्यानेन च भवति जीवने आनन्दस्य विकाशः ।

सुधाकण्ठः । मयापि प्रोक्तं शरीरादन्योऽस्ति देहिनामात्मेति । स हि जीवात्मा आनन्दमेव कामयते । किन्तु इन्द्रियाणां तर्पणेन

न हि तृप्यति मानवात्मा किं वा भोगविलासेनासौ न च रमते। अत्र रसास्वादनमेव मुख्यविषयः।

सनातनः। काव्यरसिका एकधा तं रसमास्वादयन्ति साहित्यानुशीलनेन। किन्तु वर्त्तते चानेन सार्द्धं दार्शनिको विचारसम्बन्धः। अस्ति प्रयोजनमध्यात्मरसामृतास्वादनेन। दार्शनिको विचार-साहाय्येन सुनिर्म्मलां धियमालभ्य प्रज्ञाप्रोद्भासितान्तरदृष्ट्या वहिर्विलसितानां जगतां रूपरसशब्दस्पर्शगन्धातीतमाभ्यन्तरं चिन्मयं रूपमवलोक्यामृतमास्वादयन्ति। कविस्तु प्रकृतेः रूप-विलासे निमज्ज्य तदन्तर्विराजमानं चिन्मयमपार्थिवमानन्दं विश्वमयं विलोक्य रसमञ्जुलभाषया तं प्रचारयति।

सुधाकण्ठः। अहो, आनन्द आनन्दः। आनन्द एव प्राणा विश्वस्य। आनन्द एव जीवनम्। (विश्वचित्रं प्रति) तद् वन्धो, किमधिगतं ते तत्त्वम् एवं हि कविः प्रवाहयति ललित-काव्यकलापन्यासेन धरण्यामानन्दप्रवाहिनीं पुलकेन। स हिं साधनालब्धो रसानुभवः सन्तप्तं शीतलयतिं, शोकचिन्ताजर्ज्जरं प्रसान्त्वयति, व्यथितं नैराश्यक्लिष्टं परिक्लान्तं विमूढं प्रमोदयत्युज्जीवयति चानन्दामृतसिञ्चनेन।

विश्वचित्रः। पश्यामि तदस्ति प्रयोजनमानन्दसाधनेन। यतः स हि जीवनस्य मूलमिति।

सुधाकरः। (उत्फुल्लः) वन्धो, एनामानन्दगीतिमेव गायति कवेर्वीणा। स एव जीवनमरुमानन्दसिक्तं करोति। तेन प्रवहति मर्त्ये आनन्दप्रस्रवणम्।

विश्वचित्रः। अहो, बुध्यते। अवगच्छामि सत्यम्। किन्तु, तथापि विज्ञानं लघु कर्त्तुं नार्हामि। यतोऽप्रमेयं हि विज्ञानस्य दानमपरि-हरणीयमुत्कृष्टञ्च।

सुधाकण्ठः। हा धिक्। कथमस्वीकरोमि ? न खलु विज्ञानमुपेक्षायोग्यम्, किन्तु न हि केवलं तद् यन्त्रविज्ञानमेव। किञ्च, अणुपरमाणु-क्रमतः सूक्ष्मातिसूक्ष्मपार्थिववस्तुविश्लेषनेन यदा हि वस्तूनां विचार परिणामस्तत्रैव मौलिकविज्ञानस्य प्रतिष्ठा—तत्र जिज्ञासानुक्रमेण सत्यस्योपलब्धिस्ततोऽमृतलाभार्थमात्मप्रतिष्ठा। केवलं दैहिक भोगसाफल्येनैतन्नभवति।

सनातनः। अथ किम्। देह आत्मा च उभौ स्वकार्य्यौ। विद्यानुशीलनात् परं ज्ञान विज्ञानसाफल्येन विज्ञान प्रयोग-ललितकलानुशीलनसमन्वितं जींवनमेवानन्दस्य स्पर्शलाभेन धन्याभवति। ततश्चोर्द्ध गति-जीवनयात्रायाः। आनन्दे प्रतिष्ठैवास्य परिणामः, आनन्द एव साध्यः, स हि परमश्चरमश्च गम्यविषयः।

विश्वचित्रः। (सोल्लासम्) जयतु सत्यवाणी। जीवनवार्त्तामवगच्छामि। (सुधाकण्ठं प्रति) वन्धो, नास्त्यधुना विरोधः। तदेहि, परिष्वजामः परस्परं सुखेन। (परस्परमालिङ्गति)

सनातनः। (उच्चैः) विजयता मानन्दः। जयतु सत्यम्।

सुधाकण्ठः। अहो, आनन्दामृतविहारिणोवयम्। विहरतु सुखंजीवोतृमृतेषु।

सनातनः। अमृतम्, अमृतम्, अमृतमेवोपासनीयम्।

सुधाकण्ठः। (गायति) तद्धि, संसाराप निचयैर्नितरां प्रदिग्धो
दैन्याकुलो हतसुखो मृगतृष्णिकान्धः।
काव्यामृतामलरसं परिपीय नित्य
मानन्द सिन्धु सलिले रमतां नरोऽत्र ॥

इति चतुर्थेऽङ्के प्रथमं दृश्यम्।

## द्वितीयं दृश्यम्

### सूर्यास्तप्राक्कालः

( देवस्थाननगरवर्त्ति निभृतं पुरोद्यानम्—प्रासादस्य पश्चात् प्रवहति कलरवमुखरा स्रोतस्विनी—तत्परतश्च दृश्यतेऽदूरवर्त्तिनी शैलमाला—राजपुरोद्याने विहरति राज्ञी मधुच्छन्दा ।

मधुच्छन्दा । ( विहरन्ती स्वगतम् )—इदं हि देवस्थाननगरं लीलानिकेतन-कल्पं नयनं रञ्जयति । प्रवहति पार्श्वतश्चेयं कलरवमुखरा तटिनी । दूरतः प्रान्तरान्ते सुशोभते गगनविचुम्बिनी शैलमाला । एवं हि वनकुञ्जनिर्झरमालिनीयं रम्यभूमिः फलपुष्पशस्यालङ्कृता स्नेहमयी जननीव जनान् पालयति । तदस्याः सुषमा मदीयजन्मभूमेर्गन्धर्वनगर्य्याः स्मृतिमुद्दीपयति ।

( प्रविशति चारणकन्या रत्नमञ्जरी )

प्रविश्य रत्नमञ्जरी । जयतु महादेवी ।

मधुच्छन्दा । आगम्यतां भद्रे ! तत् कस्ते परिचयः ?

रत्नमञ्जरी । देवि, रत्नमञ्जरीति मेऽभिधानम् । सर्व्वे मां चारणकन्येति जानन्ति ।

मधुच्छन्दा । ( सहर्षम् ) साधु कल्याणि, रत्नमञ्जरीवात्र वचनमाधुर्य्येण शीलेन च विनोदयसि चित्तम् । तत् कस्तेऽत्रागमनहेतुरिति कथ्यताम् ।

रत्नमञ्जरी । देवि, भगनीकल्पाहं भवत्या स्नेहसाहचर्य्यगौरवं कामये । देव्याः स्नेहसङ्गो हि मम प्रार्थनाविषयः ।

मधुच्छन्दा । अहो सुखम् ! तद् भद्रे, कुत्र त्वं वससि ? कुतो वायासि ?

रत्नमञ्जरी । देवि, अहं हि देवस्थानवासिनी । एषा रम्यभूमिरेवास्म-ज्जन्मस्थानम् । तन्मामङ्के धारयति ।

मधुच्छन्दा। उत्तमम्। अथ किं ते वृत्तम् ?

रत्नमञ्जरी। अहं व्रतचारिणी, व्रतमनुपालयामि।

मधुच्छन्दा। किं ते व्रतम् ? तद् अपनोद्यतां कौतूहलम् उत्तरदानेन।

रत्नमञ्जरी। देवि, जन्मभूमिरेव मम जननी। अत्र निवासिनो मे भ्रातृभूताः, अतस्तेषां हितसाधनं मम मातृपूजनाय कल्पते। किञ्चार्त्तानां परिचर्य्या, स्वदेशीयानां सुखसमृद्धिविधानादिकं मे व्रतं भवति।

मधुच्छन्दा। धन्यासि सुभगे पुण्यशीलेन। ममाप्येषा पुण्यभूमिर्नितरां हृदयमाकर्षति। तेन राज्यस्य कल्याणव्रतमहं सानन्दं परिगृह्णामि।

रत्नमञ्जरी। देवि, गन्धर्व्वराजनन्दिनी त्वमधुना देवस्थानराजलक्ष्मीः पालयसि प्रजावर्गं मातृस्नेहेन। मामपि कृपयास्मिन् पुण्यव्रतसाधने सहचारिणीत्वेवंरूपेण गृहाणेति प्रार्थये।

मधुच्छन्दा। स्वच्छन्दम्। त्वामद्य सहचरीत्वेन गृह्णामि। तेन त्वमपि राज्यस्य कल्याणसाधने सहायभूता मामानन्दय।

रत्नमञ्जरी। धन्यास्मि देवि ! विजयतां सुखेन भवती। पालयिष्यामि महाव्रतं शुभानुगत्येन।

मधुच्छन्दा। साधु साधु। वयं मातृधर्म्मं पालयिष्यामः।

(प्रविशति मधुपर्णा सहिता कलस्वना)

कलस्वना (राज्ञीमुद्दिश्य)। सखि, कथमेकाकिनी तिष्ठसि। अदृष्ट्वा त्वामत्र सन्धानार्थमागच्छामि।

मधुच्छन्दा। आगम्यतां प्रियसखीभ्याम्। (उभावुद्दिश्य) उपविश्यतामत्र। (उभे पार्श्ववेदिकायामुपविशतः)

मधुपर्णा (रत्नमञ्जरीमुपलक्ष्य राज्ञीं प्रति)। अथ केयमत्रभवती देवी ?

मधुच्छन्दा। इयं हि अस्माकं तृतीया सखीह सम्प्राप्ता निरन्तरं सङ्ग-साहचर्य्येणानन्दयिष्यति। तदेनामपि अस्मद्व्रतसाधने सहचरी-त्वेन सम्मानयिष्यामः।

मधुपर्णाकलस्वने (सहर्षम्)। उत्तममुत्तमम्। विजयतां महादेवी।

रत्नमञ्जरी (सखीद्वयं प्रति)। तत्सहचर्यौ वयमानन्दं विहरिष्यामः।

मधुपर्णाकलस्वने (सहर्षम्)। धन्यासि देवि। धन्या वयम्।

(मधुच्छन्दा अदूरान्ते दृष्टिं निवध्य साग्रहं प्रकृतिशोभां विलोकयति)

कलस्वना (राज्ञीं प्रति)। अत्र महादेवि, मुग्धदृष्ट्या किमवलोकयसि?

मधुच्छन्दा। प्रिये, सुषमामयी वसुन्धरा मानसं मेऽपहरति।

कलस्वना। अहो मधुरम्।

मधुपर्णा। मधुरदर्शना हि प्रियसखी देवी सर्व्वं मनोहरं पश्यति। (राज्ञीं—प्रति) देवि, विजयसे त्वं हृदयमाधुर्य्येण।

मधुच्छन्दा। प्रियसख्यः, इह देवस्थानस्यानुपमनैसर्गिक-सौन्दर्य्येषु विश्व—प्रकृतिरात्मानं निःशेषेण प्रतिफलयति। अत्र स्निग्धच्छाय-पल्लीनिलया पुष्पितकानना श्यामलदूर्व्वादलपल्लवप्रान्तराञ्चला धरित्री मनो मे लोभयति।

कलस्वना। देवि, आनन्दसञ्जीवनमेतद्धृदयरसाञ्जनं विश्वरूपं मानसं प्रसादयति।

मधुपर्णा। तेन प्रियसखी चित्रार्पितेव प्रकृतिं ध्यायति। (मधुच्छन्दां प्रति) देवि! आत्मानं विस्मरसि प्रकृतेः रूपविलासध्यानेन।

मधुच्छन्दा। मैवम्। इयं हि जननी वसुन्धरा स्नेहविगलितकरुणच्छविः सुषमासमुच्चयेन प्रसादमधुरमानन्दं वितनोति, प्रसारयति चाभयमङ्गलदृष्टिं सन्तानानां कल्याणाय। तदेनां प्रणमामि। (कृताञ्जलिर्नमस्कारं करोति)

रत्नमञ्जरी । वन्दे मातरम् ।

मधुपर्णाकलस्वने । वन्दे मातरम् ।

मधुच्छन्दा (मुद्रितनेत्रा स्तौति) । स्वर्गादपि गरीयसि देवि देशजननि, नमामि त्वाम् । अस्माकं पितृपितामहादीनां प्रसूति-मातृभूमिश्चासि त्वम्, वितरसि स्नेहराशिं छायान्नसलिलदानेन ।

कलस्वना । अहो मधुरम् ।

रत्नमञ्जरी । मधरो मधुरो मातृमहिमा ।

मधुच्छन्दा । किमधिकम् ? श्रान्तिहरोऽस्या गन्धमधुरः स्नेहसमीरणस्पर्शः । पश्यत पश्यत सख्यः, विहगकाकलीनिर्झरकल्लोलेन, मधुपगुञ्जनच्छलेनं चेयमालपति विश्वजननी विश्वदुःखहरणाय । तद्वन्दध्वैनाम् ।

रत्नमञ्जरी । वन्दे मातरम् । वन्दे मातरम् ।

सर्वाः । वन्दे मातरम् ।

इति चतुर्थाङ्के द्वितीयं दृश्यम् ।

## तृतीयं दृश्यम् ।

हेमन्तोत्सवः पथमुभयतो गृहद्वारेषु मङ्गलघटान्वितं कदलीतरुतोरणं गृहद्वाराणि च पुष्पपताकादिभिः समलंकृतानि—तत्पुरतश्चालिम्पनमण्डिता द्वारदेशभूमयः शोभन्ते । प्रविशति राजकविः सुधाकण्ठः ।

सुधाकण्ठः । ( विचरन् स्वगतम् ) अहो सुखम् !

सम्प्राप्ते शरदत्यये शुचिसिते शुभ्राभ्रदीप्ताम्बरे
श्यामा कातरवल्लरी वितनुते हैमन्तिकीं मञ्जरीम् ।

पृथ्वी स्निग्धहिमालिमौक्तिकयुता नीत्वार्घ्यपुष्पाञ्जलिं
भक्त्या विश्वपतिं विहङ्गनदितैः संस्तौति पुष्पाम्बरा ॥

(प्रविशतः पुरवासिनौ ।)

प्रथमः पुरवासी । जयतु राजकविः । कविवरः, कस्येमां प्रशस्तिं गायसि ?

द्वितीयः पुरवासी । कविचूडामणे, सुललिता तव कविता कर्णेषु सुधां वर्षति ।

सुधाकण्ठः । (सहर्षं मधुरस्वरेण) भो शृणुत,—

धवलशिशिरधौता पुष्पमालाभिरामा
विरचितयवशीर्षैर्वन्दते विश्वनाथम् ।
फलकनकसमृद्धा विश्वधात्री महीय-
मवति मनुजवृन्दं प्राणदा चान्नदानैः ॥

पुरवासिनौ । अहो धन्यो धन्यो माननीयः कविशेखरः । विजयतां भवान्-तुलनीयकवित्वमाहात्म्येन ।

सुधाकण्ठः । कृतार्थोऽस्मि भवतां मनोज्ञवचनेन । तद् भद्राणि सन्तु पौराणा अहमपि काव्यानुशीलनेन मानसं वो रञ्जयामि ।
(प्रस्थानं करोति ।)

(ततश्च प्रविशन्ति पुरबालिका उत्सवपालनार्थं सज्जितवेशाः पक्वशस्यमञ्जरीमङ्गलघटादिसमलङ्कृतं कुसुममालिकादीपमण्डितंवरणपात्रं हस्ते निधाय गायन्ति च हेमन्तलक्ष्म्या आवाहनगीतम् ।

॥ गीतम् ॥

कनकधान्यमञ्जरीकरे कनककिरणमालिनि,
एहि अन्नपूर्णे लक्ष्मि अमलकमलवासिनि ।
देहि गेहे विभवरत्नं
पूरय देवि हृदयस्वप्नं
कुरु दुःख-दैन्य नाशं सन्तानशतपालिनि ।

दुर्गतिनाशिनि नमस्ते
भवतु जननि जयस्ते
फलपुष्पशस्यवित्तैर्हसतु विश्वधारिणी—
चन्द्र-तपनमालिनी
वसुधा विश्वपालिनी ।

( नृत्यन्त्यः प्रस्थानं कुर्वन्ति )

प्रथमः पुरवासी । अहो हेमन्तलक्ष्म्याः प्रसादेन परिपूर्णोऽस्माकं शस्य-भाण्डागारः । तेन साफल्यं गीतोऽस्माकं सुखस्वप्नः ।

द्वितीयः पुरवासी । भो यूयं नृत्यत, गायत, आनन्दं कुरुत । तद् भ्रात-रधुनास्मिन्नानन्दोत्सवे गृहलक्ष्मीं केनाभरणेन संवर्द्धयिष्यसि ?

प्रथमः पुरवासी । कथमुपचाराभावः ? देवीं विश्वधात्रीं पुष्पचन्दनेना-र्चयिष्यामः ।

द्वितीयः (विहस्य) अरे, तव पत्नीमुपलक्ष्य कथयामि । यतो भार्य्यैव गृहलक्ष्मीपदवीमर्हति । सा चानन्देषु संवर्द्धयितव्या ।

प्रथमः मैवम् । अस्माकं समृद्धिमूलं हि स्वकीयः परिश्रमः । तत् कथं भार्य्यां भूषयामि ?

द्वितीयः मैवं कथया, यतो मूर्त्तिमत्यो लीलाविग्रहा नार्य्य एव सौभाग्य-सम्पदो गृहमादीपयन्ति । अतो ललनादेवता अलङ्कारेण पूजितव्याः । शास्त्रेषूक्तम्—यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र सम्पद इति ।

प्रथमः भोः, ज्ञायतेऽस्माभिर्यद् देवाः फलपुष्पोचारेणार्चनीया वन्द-नीयाश्चेति । तत् कोऽस्ति निर्बोधो भार्यामर्च्चितुमुत्सहते ?

द्वितीयः  अर्व्वाचीन, अज्ञोऽसि किमपि न जानासि।' यदहं कथयामि तदेव क्रियताम्।

प्रथमः।  (सविस्मयम्) भद्र, नाहमवगच्छामि कृतम्। तत् केनोपायेन संवर्द्धयिष्यामि पत्नी तत् कथ्यताम्।

द्वितीयः।  सुखमस्तु कथयामि तावत्। प्रथमतो गच्छ स्वर्णकारसकाशम्। अभिनव-भूषणनिर्म्माणार्थं दीयतां तस्मै यथोचितोऽर्थः। सहि धनविनिमयेन स्वर्णवलयकङ्कणादिकं चन्द्रहारं, कटिभूषणं, नूपुरयुगलं मकरकुण्डनानिचेति विचित्र स्वर्णालङ्कारजातं निर्माय प्रदास्यति। तैरेव प्रसादनीयः पत्नीजनः।

(प्रविशति तृतीयः पुरवासी)

तृतीयः पुरवासी। न केवलं स्वर्णाभरणानि, विचित्रवसनैरपि प्रयोजनमस्ति नारीणाम्। तद् आनीयन्तां मनोरमवस्त्राणि तासां शोभा-संवर्द्धनाय।

द्वितीयः पुरवासी। साधु साधु। सम्यगुच्यते। उत्सवेषु रमण्यः सर्व्वथा समर्च्चनीयाः। तोषणीयाः खलु स्त्रियः। यतस्तासां तोषे जगत्तोषः, रोषे तु विफलं जगत्।

तृतीयः।  भ्रातर्मानयामि तावत्। किन्तु कान्तानां माहात्म्यवर्द्धनार्थं तासां प्रसाधनद्रव्यैरपि प्रयोजनमस्ति।

प्रथमः।  वाहुल्यमेतत्। यतः सत्सु मनोहर-वसनभूषणेषु प्रसाधनद्रव्यं भवति विलासकरं न तु मुख्यतः प्रयोजनीयमू। तत् कथं वाहुल्यवर्द्धनार्थमायासः क्रियते?

तृतीयः।  नहि नहि सत्यमेतत्। कमनीय-वनवल्लीषु कुसमानां वर्णवचित्र्य-

सम्भारः सुखाय भवति । न किं सरसीजले विकसितश्वेतारुण-कमलानि नीलकुमुदसमवायेनाधिकां शोभां तन्वन्ति ?

द्वितीयः । अहो, अपूर्व्वः काव्यकालोच्छ्वासः, नूनं नारीणामङ्गशोभाविधाने वर्णरागाणामपि वर्त्तते प्राशस्त्यम् । तत्रैवाभिमतमहं समर्थये ।

तृतीयः । वन्धो, द्रव्यमाहात्म्यमवश्यमेव स्वीकरणीयम् । तन्नाहम-यौक्तिकं कथयामि ।

द्वितीयः । साधु साधु । तवैव जयः प्रतिपद्यते । विजयसे त्वम् ।

प्रथमः । जयोऽस्तु जयोऽस्तु । जयति ते युक्तिगौरवम् ।

तृतीयः । अतोऽभिनन्दयामि सकलम् । एतेन प्रतिष्ठित सर्व्वेषां विजयः । तेन हैमन्तिकोत्सवे गृहलक्ष्म्य सर्व्वथा भूषयितव्या इत्येव सिद्धान्तमनुपालयाम ।

( सर्व्वे हसन्ति )

प्रथमः । (सहर्षम्) उत्तममुत्तमम् । क्षीरपायसलड्डुकादीनि आस्वा-दयामः । आनन्दः । अहो आनन्दः !

तृतीयः । अत उत्सवमाहात्म्याद् दयितानामानन्दार्थं विलासप्रसाधन सम्भारश्चाहरणीयः ।

( प्रविशति प्रसाधनपण्यविक्रेता विचित्रविलासद्रव्य-सम्भारं शिरसा संवहन् ।)

प्रसाधनविक्रेता । (विचित्रकण्ठस्वरेन) प्रसाधनम् । विचित्रप्रसाधनम् !

पल्लीवासिनः । (सहर्षम्) अरे, यथाकालमायाति प्रसाधनपण्यजीविकः ।

प्रथमः । (पण्यजीवनं प्रति) भोः किं किमस्ति ते पण्यजातम् ?

प्रसाधनविक्रेता । अथ भवान् किं किं द्रव्यमभिलसति ?

प्रथमः। अरे त्वयैव समुल्लिख्यन्तां नामानि द्रव्यजातस्य, यानि पणनार्थमानयसि।

द्वितीयः। भद्र, त्वयोल्लिखितेषु नामसु द्रव्याणां निर्व्वाचनं विदध्मः।

तृतीयः। साधु। त्वयैव विलासोपकरणानां नामोल्लेखः करणीयः। पश्चाद् वयं यथाप्रयोजनं क्रीणामः।

प्रसाधनविक्रेता। [ गीतिस्वरेण ]

वदने पुष्पपरागरागः, अधरेऽरुणरञ्जनम्,
चरणपद्मे रक्तमलक्तं, नयने कृष्णमञ्जनम्।

द्वितीयः। [ सहर्षम् ], साधु साधु। ततश्च ततश्च ?

तृतीयः। ततः किम् ? ततः किम् ?

प्रसाधनविक्रेता। [ गीतिस्वरेण ]

सुरभि अङ्गकान्तिद्रव्यं चन्दनगन्धसारः,
स्निग्धचिकुरगन्धतैलं चारुचन्द्रहारः।
तन्महाभागाः, कथ्यतां केन केन प्रयोजनमिति।

प्रथमः। अरे, तिष्ठ-तिष्ठ। यावद् गृहिणीं पृष्ट्वागच्छामि।

द्वितीयः। विश्रम्यतां भो क्षणमत्र। प्रथमतो गृहं गत्वावगच्छामि, भार्या किं-किमभिलषतीति।

( उभौ प्रस्थानं कुरुतः )

प्रसाधनविक्रेता। उत्तमम्। किञ्चित् परिक्रम्य पुनरेवागच्छामि विक्रयार्थम्, तावदवगम्यतां पत्न्या अभिलषितम्।

तृतीयः। सम्यगुक्तम्। गृहिण्य एव जानन्ति तासां प्रयोजनीय-द्रव्यम्।

अतस्त्वया क्षणात् परं पुनरागन्तव्यम्। मा खल्वधिकविलम्बः करणीयः। ( प्रस्थानं करोति )

प्रसाधनविक्रेता। ( स्वगतम् ) उत्तमम्। कियद्दूरं परिक्रम्याहमागच्छामि। ( उच्चैः ) प्रसाधनम्—मनोरमं प्रसाधनम्। (प्रस्थानं करोति)
( प्रविशन्ति उत्सवरता मङ्गलद्रव्यसम्भारकराः पुररमण्यो गायन्ति च मङ्गलगीतिं समस्वरेण )

गानम्

हेमन्तलक्ष्मि एहि गेहम्
मण्डय स्वास्थ्यैः कोमलदेहम्।
देहि शस्यं फल-पुष्प-धान्यम्,
कनकान्वितं कुरु सकलं मान्यम्।
स्वीकुरु पूजामर्घ्यं गानम्,
चन्दननीरैर्विधेहि स्नानम्।
क्षीरमोदकं पायसं रम्यम्
व्यञ्जनमन्नं भक्षय काम्यम्।
तिष्ठ देवि सुचिरं वर्षम्,
नृत्यगीतैर्विदधाम हर्षम्।

( प्रस्थानं कुर्वन्ति )

(पटीक्षेपः)

इति चतुर्थं दृश्यम्

इति चतुर्थोऽङ्कः

## पञ्चमोऽङ्कः

### प्रथमं दृश्यम्

( देवस्थानराजसभायामुपविष्टः सपार्षदो राजा विजयकेतुः )

प्रविशति चरः.

प्रविश्य चरः। विजयतां महीपालः। ( वन्दते )

विजयकेतुः। का वार्त्ता दूत ?

चरः। देव, अशुभः सन्देशः। महाराजाय दुःसंदेशमानयामि।

विजयकेतुः। निःशङ्कं कथ्यताम्। राज्यस्य वृत्तान्तं ज्ञातुमुत्सुकस्तिष्ठामि।

अमात्यः। सम्यगाहात्रभवान्। राजानश्चारचक्षुषः। अतो दूतमुखान्निखिलवृत्तान्तोऽवगन्तव्यः।

विजयकेतुः। ( अमात्यं प्रति ) तमहमाकर्णयामि। ततश्च भवद्भिः संमन्त्र्य यथाकर्त्तव्यं साधनीयम्।

अमात्यः। ( चरं प्रति ) उच्यतां भो राज्यस्य वृत्तान्तः। एष महाराज उत्कर्णस्तिष्ठति।

चरः। राजन्, महद् विघ्नकारणमुपस्थितम्। देवस्थानप्रान्तवर्त्तिषु गिरितटेषु शत्रवो निपतिताः।

विजयकेतुः। ( समुद्विग्नः ) शत्रवः समापतिताः ! के ते तावदस्माकमरातयः, किं च ततो वृत्तं, कथय सर्व्वमविलम्बेन।

अमात्यः। ( चरं प्रति ) कथय विवरणं दूत। अपनोदयास्माकं कौतूहलम्।

चरः। श्रूयतामत्र भवद्भिः। ते हि विशालपुरसैनिका नैशान्धकारे निःशब्दमुपसृत्य अरुणाचलप्रान्तदेशमाक्रान्तवन्तः। विश्वासघातकः सिन्धुकूटाधिपतिश्च विशालपुराधिपतिना सन्धायोत्तरपश्चिमप्रान्तमुपस्थितो दुर्गाक्रमणाय।

विजयकेतुः। ( सोद्वेगः ) ततस्ततः ? का तावदवस्था अस्मत्पक्षीयाणाम् ? किं च ततोऽनुवृत्तं, कथय विवरणम् आनुपूर्व्वेण।

चरः । महाराज, ते हि कपटाचारिणो निशायां सुप्तिमग्नेषु विश्वजनेषु अरुणाचलतटमभिलक्ष्य आग्नेयास्त्रेभ्योऽनलवर्षणं कृतवन्तः । प्रकम्पिताश्च प्रशान्ताः शैलतटा अस्त्राणां गर्ज्जनेन ।

विजयकेतुः । ततो नु किं प्रतिविधानमनुतिष्ठन्ति देवस्थानसैनिकाः ?

चरः । ततो देव, अस्मत्सैनिकैः सपदि प्रत्याक्रम्य महान् प्रतिरोधः प्रदत्तः ।

अमात्यः । ततश्च किं फलं तावदासादितं कथ्यतां विस्तरेण ।

चरः । श्रूयतां भवद्भिः । अस्मत्पक्षीय-वीराणामज्ञातरूपेणैव शत्रुभिराक्रान्तो देशः । अधिकृतश्च कियदंशो गिरिप्रान्तरस्य ।

विजयकेतुः । ( सरोषम् ) विश्वासहन्तारो विशालपुराधिपतयः ! आसीच्च तद्देशवासिभिः सार्द्धमस्माकं चिरमित्रत्वम् । अधुना तेषां दुर्लोभहेतोर्भग्नतां गतः सुचिर सौहृद्यसम्बन्धः ।

अमात्यः । धिग् धिगनार्योचितं प्रचेष्टितं मित्रनृपाणां यैर्धर्मो विलङ्घितः, विसृज्यते च शुभविवेकः ।

पार्षदाः धिक् धिक् !

विजयकेतुः । एवं विलसति कपटानां दुर्बुद्धिः ! तेनानार्य्यमाचरन्ति च सिन्धुकूटनायकाः, ये हि चिरमस्मासु हिंसापरायणा नीतिं विलङ्घ्य विना कारणं वैरमनुतिष्ठन्ति । अहो, पश्यामि—दुर्मतिर्मनुष्यत्वमुपहसति, भवति च जगतीतले पशुत्वस्याभ्युदय इति । ( चरं प्रति ) तद् दूत, कथ्यतामामूलविवरणं कर्त्तव्यनिर्द्धारणाय ।

चरः । देव, अचिरेणैव सेनाधिनायक आगमिष्यति । अहं हि केवलं तदागमनवृत्तान्तज्ञापनाय प्रेषितः । स हि तूर्णं समागम्य महाराजाय सर्वं निवेदयिष्यति । (अभिवादनानन्तरं गच्छति)

( प्रविशति सेनापतिः पुरञ्जयः )

प्रविश्य सेनापतिः पुरञ्जयः । जयतु महीपालः । देव, एषोऽहं यथाकालं समुपस्थितः सर्व्वं ते निवेदयामि ।

अमात्यः। कथ्यतां विवरणं सेनापाल। वयमुत्सुकाः सोद्वेगं तिष्ठामः।

पुरञ्जयः। अलमुद्वेगेन देव। महाराज, नास्ति चिन्ताकारणं धीमतोऽत्र भवतः। यथाशक्ति प्रतिरोधोऽस्माभिर्दीयते। अस्माकं वीरसैनिकानां प्रबलप्रतिघातेन प्रतिहताः शत्रवोऽधुना। अतःपरमुपसर्पितुं न प्रभवन्ति। किञ्च, ते पलायनार्थं प्रचेष्टन्ते।

अमात्यः। (सहर्षम्) सुसन्देशो वीर। अतःपरमरातयो यथा न पुनरुपसृत्य दुर्गाक्रमणाय प्रचेष्टन्ते तथा विधेयम्। निःशेषं पराजित्य विताड़यितव्याश्च दुर्मदाः सिन्धुकूटसैनिका न पुनर्भवाय।

पुरञ्जयः। अथकिम्। ते हि दुरात्मानोऽपि प्रत्याहताः समुचितशिक्षां प्रापिताः। पराजितास्तेऽधुना अस्माकमाघातमसहमानाः पश्चाद्धावन्तो गहनदुर्गमप्रदेशमाश्रयन्ते।

विजयकेतुः। विजयतां सेनापालः। संवर्द्धयामि त्वाम्। किन्त्वस्मिन् सङ्कटकाले त्वया विरहिता अस्मत्सैनिका कथं प्रतिरोधाय यतन्ते इति मे जिज्ञासा वर्त्तते।

पुरञ्जयः। अलं संशयेन नाथ! सहनायकान् सैनिकान् यथोचितमुपदिश्य महाराजाय निवेदयितुमागच्छामि।

अमात्यः। साधु वीर, धन्योऽसि। अस्मद्वीराणां कुशलं वर्णयित्वापनोद्यतां महाराजस्य कौतूहलम्।

विजयकेतुः। अथ किम्, तदेवावगन्तुमिच्छामि। यतोऽस्मद्वीरसैनिकानां कुशलमेव राज्यस्य कुशलम्। ते हि देवस्थानस्य गौरवस्थानम्।

पुरञ्जयः। निवेदयामि धीमन्। अस्मत्सैन्यानां पराक्रमेण शत्रूणां बहवो निहताः। किन्तु तथापि दुरभिसन्धिकारिणो रिपवो न खलूपेक्षणीयाः। यतोऽस्माकमपि केचित् प्रनष्टाः, स्वल्पे चान्ये कापट्येन छलयित्वा शृङ्खलीकृत्य दूरं नीताः।

विजयकेतुः। अहो कष्टम्! स्वदेशरक्षार्थमात्मोत्सर्गकारिण एते वीरसैनिका

देवस्थानस्य गौरवहेतवः। एषामात्मत्यागश्चिरस्मरणीयो भवति। (मन्त्रिणं प्रति) यातु। अमात्यप्रवर, अधुना कृत्यविषये मन्त्रणा विधेया। तन्निर्णीयतां कर्त्तव्यजातम्।

अमात्यः। महाराज, तदेव चिन्तयामि। इदानीं तु शत्रुशिविरे निरुद्धानामस्मत्सैनिकानामुद्धारसाधनार्थं शत्रूणामुत्सादनार्थञ्च प्रयत्नः करणीयः।

विजयकेतुः। साधु। सम्यगुचितोऽयं निर्द्देशः। (सेनापतिं प्रति) तत् सेनाधीश, भवतापि कर्त्तव्यविषयेऽधुना किं विचिन्त्यते ?

पुरञ्जयः। देव, मातृभूमेर्गौरवरक्षार्थमेतदवश्यमेव कर्त्तव्यम्। देवस्थानं खलु अस्माकं जन्मभूमिर्मातृभूमिश्च। तदस्याः पुण्यभूमेः स्वाधीनतारक्षार्थं शत्रूणां समुचितपराजयविधानार्थञ्च सर्व्वात्मिका प्रचेष्टा विधेयेति मम सङ्कल्पः।

विजयकेतुः। उत्तमम्। सङ्कल्पसिद्ध्यर्थं यथोचितम् अनुष्ठीयताम्। विज्ञाप्यन्तामस्मद्वीरसैनिका यत् प्रचण्डबलविक्रमेणारातीन् विनाश्य लभन्तां ते विजयमाल्यमिति। अहमपि तेषामानुकूल्यार्थं सर्व्वात्मना मां नियोजयामि।

पार्षदाः। जयतु जयतु देवस्थानेश्वरः।

अमात्यः। विजयतां महीपालः। राजन्नहमपि सर्व्वथा भवतां सहायो भवामि।

विजयकेतुः। साधु धीर ! धन्योऽस्मि महतामानुकूल्येन।

पुरञ्जयः। तन्महाराज, आज्ञापयतु मां प्रतिगमनाय। नूनमचिरेणैव स्वस्थानं गत्वा पुनरायोजयामि पूर्णभावेन शत्रुविजयिनीं नवीनां समरसज्जां दुर्मतीनां विनाशाय। (असिना शिरः स्पृशति) अत्र पुनर्महाराजस्यानुमतिं प्रार्थये।

विजयकेतुः। स्वच्छन्दं विधीयतां समरोद्योगः। एषोऽहं समर्थनं ज्ञापयामि।

पुरञ्जयः। जयति देवस्थान-राज्येश्वरः। कीर्त्तिस्रजं लभतामस्मद्देशो विजयलाभेन।

विजयकेतुः। किञ्च। देवस्थानवासिनोऽन्ये च बहुवीराः संग्रामार्थं त्वामनुयास्यन्ति। प्रेरयिष्यामि च तूर्णमजस्रसमरोपकरणसम्भारं युष्मत्साहाय्याय। यूयं हि प्रचण्डरणहुङ्कारेण दिङ्मण्डलं प्रकम्पयन्तो धावत रिपुनाशाय।

पुरञ्जयः। महाराजस्यादेशं शिरसा गृह्णामि। गच्छामि रणक्षेत्रम्। रक्षिष्यामि च स्वदेशम्। किञ्च शत्रुशोणितारुणमपहृतं देशभागं पुनरधिकृत्य स्थापयिष्यामि तत्र जयपताका अमितवीर्य्येण। (प्रस्थानं करोति)

पार्षदाः। जयोऽस्तु जयोऽस्तु सेनानायकस्य।

विजयकेतुः। (उत्थाय) जयोऽस्तु वीराणाम्। (पार्षदान् प्रति) भो भोः पार्षदाः, प्रचारयन्तु भवन्तः सन्देशं राज्यवासिषु। विज्ञाप्यतां तेभ्यो मम वार्त्ता यज्जन्मभूमिरक्षार्थं सर्व्वे वीरधर्म्मं पालयन्त्विति।

पार्षदाः। (समुत्थिता) वयं राजानुशासनं पालयामः। जन्मभूमिं रक्षिष्यामः।

विजयकेतुः। (अमात्यं प्रति) अमात्यप्रवर, सीमान्तवर्त्तिनां विदेशीयसैनिकानां गुप्तचराणां च सन्धानार्थं तेषामन्तर्घातकरकर्म्मणां च निवारणार्थं चाराः प्रच्छन्नसैनिकाश्च नियोक्तव्याः।

अमात्यः। युक्तमादिशति नरेन्द्रः। इह सङ्कटकाले सर्व्वथैव परिलक्षणीयं विरोधिनां वैरिणाञ्च गूढ़कृत्यजातम्। यतोऽन्तःशत्रवो बहिःशत्रवश्च शङ्काकारणं भवन्ति।

विजयकेतुः। तदधुना सभावसानं घोषयामि। सर्व्वेऽतःपरं स्वकृत्यमनुतिष्ठन्तु। (प्रस्थानं करोति)

पार्षदाः। जयतु जयतु महाराजः। (सर्व्वेऽमात्यप्रमुखाः प्रस्थानं कुर्व्वन्ति। ध्वनति च सभाभङ्गनिर्देशको वाद्यनादः।)

इति

पञ्चमाङ्के प्रथमं दृश्यम्।

## द्वितीयं दृश्यम्

( राजपथे चारणकन्या रत्नमञ्जरी देशसेवाव्रतिनं तरुणीसङ्घं परिचालयति। करे तस्या देवस्थानपताका। अनुगच्छन्ति च श्रेणिशस्त्रा देशरक्षिणस्तरुणाः। सर्व्वे रणवाद्यतानक्रमेण पदक्षेपं कुर्व्वन्ति, गायन्ति च देशवन्दनां बालिकाः। )

॥ गानम् ॥

वन्दे देशमातरम्,
लक्षवीरजन्मदात्रीं जगद्धात्रीं मातरम्।
जय विश्ववन्दिते
जय सुरनन्दिते
पुण्यमहिमसुषमामयीं वन्दे शुभां मातरम्।
जय जनपालिनि
शान्ति-सौख्यदायिनि
करुणाभयस्नेहदात्रि दुःखतापहारिणि—
अन्नपूर्णे चिन्मयि त्वां वन्दे जगन्मातरम्।

( नेपथ्ये सनातनो घोषयति )

"वन्दे मातरम्"

सनातनः। ( नेपथ्ये ) देशोद्धारो महाव्रतम्। जन्मभूमिर्वीराणामात्मोत्सर्गमिच्छति।

सर्व्वाः। वयमात्मदानं कुर्म्मः। व्रतं साधयामः।

रत्नमञ्जरी। "वन्दे मातरम्"।

सर्व्वाः। वन्दे मातरम्।

( प्रविशति सनातनः )

प्रविश्य सनातनः। वन्दे मातरम्। स्वदेशार्थं प्राणपणः करणीयः।

सर्व्वे। वयं प्राणानुत्सृजामः। देशं रक्षिष्यामः। शत्रूनुत्सादयिष्यामः।

सनातनः । उत्तमम् । जयोऽस्तु जन्मभूमेः । ( सर्व्वानुद्दिश्य ) भो भो देशसेवका व्रतिन्यश्च, सफलमस्तु युष्माकं व्रतम् । एषोऽहं विजयलाभार्थं युष्मान् मङ्गलतिलकेन संवर्द्धयामि ।

( सनातनः देशसेवकानां ललाटे तिलकमङ्कयति । भूषयति च रत्नमञ्जरी व्रतचारिणीनां ललाटं तिलकेन । )

रत्नमञ्जरी । ( सनातनं प्रति ) वीरवर्य्यः, एतास्तरुण्यो व्रतचारिण्योऽपि जन्मभूमेः सेवाव्रतं परिगृह्णन्ति । तत् संवर्द्धयन्तामिमा आशीर्व्वचनेन ।

सनातनः । ( उपगम्य बालिकाः समुद्दिश्य ) भो मातृमूर्त्तयः ! जन्मभूमेः सेवार्थं युष्मानहमाह्वयामि । ( देशरक्षिणः प्रति ) हे देशसेवकाः, रक्षत सर्वे यूयं जन्मभूमेर्गौरवम् । सर्व्वे स्वदेशं सेवध्वम्, पालयत वीरधर्म्मं वीर्य्येण ।

रत्नमञ्जरी । किञ्च भोः, अद्य तरुणीनां महत् कर्त्तव्यमुपस्थितम् । ( तरुणी-सङ्घमुद्दिश्य ) भोः कल्याण्यः, यूयं देशभक्तिं प्रचारयत । आर्त्तानां सेवया, क्षुधितेभ्योऽन्नदानेन, अशरणानामाश्रयदानेन किञ्च समराङ्गनेष्वाहतानां परिचर्यया पालयत मातृधर्म्मं गौरवेण ।

सर्व्वे । वन्दे देशमातरम् । वन्दे मातरम् ।

सनातनः । विजयतां देशजननी । भो वीराः, सार्थकमस्तु युष्माकं व्रतम् । जन्मभूमेर्गौरववर्द्धनेन देदीप्यतां मातृगणः ।

( प्रविशति कविः सुधाकण्ठः )

प्रविश्य सुधाकण्ठः । विजयतां जननी जन्मभूमिः । जननी जन्मभूमिश्च स्वर्गादपि गरीयसी । तदेनां देशमातृकामस्माकं पितृपितामहादीनां मातृमातामहानाञ्च जननीं पुण्यभूमिं नमामः ।

सनातनः । आगच्छ प्रियबन्धो ! अस्मिन् महाव्रतसाधने कवेरपि साहचर्य्येणास्ति प्रयोजनम् ।

रत्नमञ्जरी । ( कविं सम्बोध्य ) कविवर, वयमद्य जन्मभूमेः प्रियसन्तानरत्नं त्वां संवर्द्धयामः ।

सुधाकण्ठः। विजयन्तां कल्याण्यः। प्रतिगृह्णामि भवतीनामभिनन्दनम्। (सनातनमुद्दिश्य) सखे, देशोद्धारमहायज्ञे कृतव्रतान् धीरानत्र भवतः सभाजयामि।

सनातनः। विजयतामत्रभवान्। किन्तु कथ्यतां कवे, केनोपायेनाधुना निद्रितानां सुप्तिभङ्गो भवेदिति। कथं वा जन्मभूमेर्गौरवरक्षार्थं देशवासिनः समुद्दीपयामि, तत् कृपया निर्दिश्यताम्।

सुधाकण्ठः। भ्रातस्तदेव साधयामि। देशवासिनां समुद्बोधनमेव मे व्रतम्। एतदर्थं मे आत्मा नियोजितः।

सनातनः। किं वक्ष्यामि महाप्राण? अद्यापि केचिद् भोगविलासैः कालं यापयन्ति। आत्मत्यागस्तु दूरेऽस्तु, जन्मभूमेर्विपत्कालेऽपि न हि लभ्यते तेभ्यः सहयोगित्वमानुकूल्यं वा। अपरे च केचिद् गूढं प्रतिकूलमाचरन्ति विवेकविसर्जनेन।

सुधाकण्ठः। सखे, वर्त्तन्ते चिरमत्र केचिज्जनाः ये हि कुशिक्षाप्रभावेण मानव-जीवनस्य माहात्म्यं विस्मृत्य वैदेशिक-भोगवाद-मोहान्धा विपथमाश्रयन्ते। विभ्रान्तानां तेषां प्रबोधनमेव महत् कार्य्यम्।

सनातनः। केनोपायेन तद् भविष्यति? विशेषतोऽधुना समाक्रान्ता जन्मभूमिररातिभिः। अतः साम्प्रतं देशरक्षैव मुख्यं प्रयोजनम्।

सुधाकण्ठः। अलं नैराश्येन वीर। ये हि निरुत्साहा निरुद्यमाश्चात्मकर्त्तव्येषु, तानहमुद्दीपयिष्यामि देशात्मबोधेन, श्रावयिष्यामि मोहान्धान् जीवनसंगीतम्।

रत्नमञ्जरी। साधु साधु। जीवतु कविर्जन्मभूमेर्मङ्गलाय। (सुधाकण्ठं प्रति) तत् कविवर, मङ्गलगीतिप्रचारैः अस्मिन् देशप्राणसमुद्बोधनकर्म्मणि प्रधानसहायकं भवन्तमेव प्रथमं संवर्द्धये।

सुधाकण्ठः। शिरोधार्य्यमस्तु कल्याणीनां भवतीनां शुभाभिवन्दनम्। तदर्थं मातॄणां स्नेहाशिष एव मम वीणायां शक्तिं सञ्चारयन्तु।

सनातनः। (सुधाकण्ठं प्रति) एतद्धि त्वय्येव युज्यते। श्रावय कवे जन्मभूमिं

देशप्रेमोद्दीपकसंगीतनिर्झरेण यथा सर्व्वे मातृवन्दनार्थमात्मानमुत्सृजन्ति ।

सुधाकण्ठः । तदेव प्रचारयामि । जनन्या आराधनमेवास्माकं व्रतम् । वन्दे मातरम् । वन्दे मातरम् । ( प्रस्थानं करोति )

रत्नमञ्जरी । अहमपि मातृणां गौरवेण नारीसमाजमाह्वयामि । ताः खलु देशजनन्या हितार्थं सर्व्वथा व्रतपरा भवन्तु ।

सर्व्वे । वन्दे मातरम् । वन्दे मातरम् ।

सनातनः । वन्दे देशजननीम् । विजयतां देशमाता पुण्या जन्मभूमिः ।

( सर्व्वे निष्क्रान्ताः )

## तृतीयं दृश्यम्

( नेपथ्ये करुणकोलाहलः—पूर्व्वकूटप्रदेशाच्छरणार्थिनः आश्रयलाभार्थं देवस्थानं प्रविशन्ति । प्रविशति प्रथमतः सपत्नीको वास्तुहीनः—शिरसि तस्य लुण्ठितावशेषद्रव्यपूर्णा छिन्नवस्त्रनिर्म्मिता पुट्टलिका । )

प्रथमो वास्तुहीनः । ( भार्य्यां प्रति ) चण्डिके, चल तूर्णम् । अन्यथा पूर्व्वकूटराज्यरक्षिणां हस्ते पतित्वा पञ्चत्वं प्राप्स्यामः ।

चण्डिका । ( क्षीणकण्ठेन ) अनशनक्लिष्टाऽहम् । दुर्बलं चरणयुगलं नातः परं चलति । ( उपविशति )

वास्तुहीनः । अये, किं करिष्यसि ? मृत्युद्वारात् कथमपि वयं प्रत्यागच्छामः । तत् कथमात्मविनाशं पुनरामन्त्रयसे ? किञ्च, अतीते कियत्पदे उपस्थास्यते देवस्थानराज्यम् । अतः प्राणरक्षार्थं प्रचल ।

चण्डिका । हा धिक् ! अधुना मरणमेव श्रेयः । किं पुनर्दग्धजीवितेन ? ( विलपति )

वास्तुहीनः । धैर्य्यमुपेहि प्रिये । मृत्युराज्यमतिक्रान्ता वयम । अचिरेणैवास्माकं दुःखमुक्तिर्भवेत् । तदुत्तिष्ठ प्रिये, प्रचल कियत्पदमात्रम् । ( पत्नीं हस्तेनोत्तोल्य धृत्वा चलति )

चण्डिका। ( पुनः पथि विरम्य ) नाहमतः पारयामि। देहि—मे—भूतला-श्रयम्। ( संज्ञाहीना भुवि पतति—पतिश्च विह्वलः शुश्रूषते )

वास्तुहीनः। ( सविषादम् ) अहो किमिदम्! प्रिये, उन्मीलय नयनयुगलम्। एषोऽहं तिष्ठामि। ( मूर्च्छापनोदनार्थं प्रचेष्ट्य ) अतः किं करोमि? ( स्वगतम् ) नेयमालपति। किमहं प्रतिकरोमि?

( प्रविशति द्वितीयो वास्तुहीनः सहवृद्धाशक्तस्वजनः—वृद्धस्तस्य स्कन्धदेशे हस्तमारोप्य धीरमागच्छति—पृष्ठतश्चापरे जीर्णवेशा वास्तुहीनमानजा उपसर्पन्ति।)

द्वितीयो वास्तुहीनः। ( प्रथमं प्रति ) बन्धो, किं वृत्तम्? कथमेषा शयाना तिष्ठति?

प्रथमः। भ्रातर्वास्तुभूमेः पलायितोऽहं विपन्नः। एषा मे पत्नी भयशोक-कातराऽनशनक्लिष्टा मूर्च्छां गच्छति।

द्वितीयः। ( स्वगतम् ) अहो दुःखम्। सर्व्वेऽत्र वयं हतभाग्याः। ( प्रकाशम् ) भ्रातरलमुद्वेगेन। सहायतां ते करोमि। तद्गृह्यतामुदकं मम मृद्भाण्डात्। परिचर्य्ययास्याः संज्ञालाभो भविष्यति। ( उभौ नीरसेकं वीजनञ्च विधत्तः )

चण्डिका। ( संज्ञां लब्ध्वा शङ्कितकण्ठेन) भो रक्ष रक्ष। न वयं दोषमाचरामः।

प्रथमः। प्रिये, मा भयम्। वयं देवस्थानप्रान्तमागताः।

द्वितीयः। अत्र नास्त्यरातिभिर्मारणशङ्का। निरापदा वयम्।

प्रथमः। पश्य प्रिये, समुत्तीर्णा वयं पापराज्यम्। तत् त्यज भयम्।

चण्डिका। ( इतस्ततः संवीक्ष्य क्षीणकण्ठेन वदति ) अहो, कथं जीवामि? ( विषादार्त्तस्वरेण ) दुर्वृत्तैर्विनाशिताः सन्तानाः। तत् कथमिदानीं दग्धप्राणान् धारयिष्यामि? ( विलपति )

प्रथमो वास्तुहीनः। ( अश्रुसिक्तनेत्र ऊर्द्ध्वमवलोक्य ) विधातः, कथमस्मान् जीवयसि?

द्वितीयः। भ्रातर्निवरां भाग्यहीना वयं, तत् किं किं ते प्रनष्टम्? किंवा ध्वंसाद् रक्षितम्?

प्रथमः । भोः, किं वदयामि ? दग्धं मे गृहम् । घातिता वंशधराः । स्वजनाश्च केचिन्निहताः, अन्ये च प्राणभयात् पलायिताः । कुत्र ते शरणमापद्यन्ते, तन्न जानामि ।

द्वितीयः । अहो, सर्व्वे एव समदशामापन्नाः । पाषण्डैः सर्व्वस्वं नो लुण्ठितम् । न किमपि सन्त्यक्तं जीवनयापनाय । पश्चाच्चाग्निसंयोगेन भस्मीकृतो मे वास्तुगृहः ।

( प्रविशन्ति करुणमावेदयन्तः शरणार्थिनः )

प्रविश्य सर्व्वे । रक्ष रक्षाशरणान् । भो भो महात्मानो, नष्टनीरेभ्योऽस्मभ्यं शरणं प्रयच्छत ।

प्रथम-द्वितीयौ । ( उपगम्य ) वयमपि भ्रातरो नरपशूनां ताण्डवेन सर्व्वस्वहीना आगच्छामः ।

सर्व्वे । ( समस्वरेण ) ध्वंसं यान्तु दुराषदाः । निपातं यान्तु धर्म्म-हीनाः ।

( प्रविशति विपरीतपार्श्वतः सह देशसेवकैः सनातनः )

सनातनः । कथं कोलाहलः ? ( पुरतः उपसृत्य वास्तुहीनानुद्दिश्य ) किमा-वेदयथ भ्रातरः ? कुतो वाऽगम्यते ?

वास्तुहीनाः । वयं वास्तुहीनाः, आश्रयं याचामहे ।

प्रथम-द्वितीयौ । महाभाग, वयमत्याचारिणा शासकेन निपीड़िताः प्राणरक्षार्थ-मुपस्थिताः ।

सनातनः । ( स्वगतम् ) अहो दुर्भाग्यम् । एते सर्व्वस्वहीनाः प्राणरक्षार्थ-मायान्ति । ( प्रकाशम् ) कुत आगम्यतेऽत्र भवद्भिः । ?

सर्व्वे । पूर्व्वकूटप्रदेशात् कथमपि जीवन्त आगच्छामः ।

सनातनः । अलमुत्कण्ठया भ्रातरः । देवस्थानं खलु विपन्नानामशरणा-नाञ्च चिरमाश्रयस्थलम् । तदत्रावश्यमेव युष्माकमाश्रयलाभो भविष्यति । ( देशसेवकान् प्रति ) भो देशसेवकाः, विधातव्यं विहितमेषां दुर्दशामोचनाय । अविलम्बेन नीयन्तामेते शरणार्थिनिकेतनम् आश्रयदानाय ।

प्रथम-द्वितीयौ वास्तुहीनौ । न हि बाधयिष्यन्ति राजानुचराः ?

सनातनः । अभयमभयम् । राजकिङ्करा अत्र जनानां सौख्यविधानाय प्रवर्त्तन्ते । नात्र केचिद् युष्मान् निपीड़यिष्यन्ति ।

( प्रविशति देशसेविकाद्वयसहिता रत्नमञ्जरी )

रत्नमञ्जरी । केऽत्र च्छिन्नमूलान् वास्तुहीनान् पीड़यन्ति ? (वास्तुहीनानुद्दिश्य) भो भाग्यविड़म्बिता, अभयं वो ददामि । नात्र विलसति कलङ्ककरं राजशासनम् जनानां लाञ्छनाय । राजदण्डोऽत्र हिंसाकलुषमुक्तो न्यायधर्म्ममनुसरति ।

देशसेवकाः । जयति-जयति मातृमहिमा ।

सनातनः । ( रत्नमञ्जरीं प्रति ) देवि, अभयं प्रदीयतां निपीड़ितेभ्यः । ते हि निर्भयकरुणां प्रयाचन्ते ।

रत्नमञ्जरी । पालयामि मातृधर्म्मं वीर । एषाहं यथोचितमनुतिष्ठामि । ( शरणार्थिजनानुद्दिश्य ) नास्ति चिन्ताकारणं भद्राः । अनुगम्यन्तां निःशङ्कमेते वो भ्रातृकल्पा देशसेवकाः ।

वास्तुहीनाः । अहो महती करुणा—महती करुणा ।

देशसेवकाः । (वास्तुहीनान् प्रति ) आगच्छत सौम्याः । नयामो युष्मान् आश्रयस्थलम् ।

वास्तुहीनाः । ( उच्चैः ) विजयन्तां महात्मानः ।

( सर्व्वे देशसेवकाननुगच्छन्ति )

रत्नमञ्जरी । अहो क्रूरा पापबुद्धयः कुशासनकलुषिता मानवानामनर्थं साधयन्ति । तेन सहस्रशो भाग्यहीनाः शरणार्थिनः आगच्छन्ति ।

सनातनः । देवि, पापबुद्धीनामयं स्वभावः । तेन मदान्धा नृपतयो नीतिं परिहाय लोकानां सौख्यं नाशयन्ति । यातु । अधुना अस्माभिरपि महत्-कर्त्तव्यसाधनाय प्रवर्त्तितव्यम् ।

रत्नमञ्जरी । जयोऽस्तु वीरधर्म्मस्य । विजयस्व वीर धर्म्मपालनेन । तदहमपि प्रचलामि । गत्वा च देव्यै सर्व्वं निवेदयामि । ( निर्गच्छति )

सनातनः । भद्रमस्तु कल्याण्याः । साधय त्वं पुण्यव्रतं गौरवेण । ( परिक्रम्य

स्वगतम् ) अहो, दुर्भाग्यकरं खलु युगपरिवर्त्तनम्। एषा च मदोन्मत्ता धर्म्महीना कुटिला राजनीतिः सभ्यतायाश्छद्मवेशं परिगृह्य स्पर्द्धते। सा च फणिनीव दशति निरपराधं, विभ्रामयति च नरपतीन् प्रतिष्ठालाभाय। अतः को नु मानवसमाजं त्रास्यते !

इति पञ्चमेऽङ्के तृतीयं दृश्यम्।

## चतुर्थं दृश्यम्

( देवस्थानराजप्रासादः—विजयकेतुरेकाकी पुरतः परिक्रामति )

विजयकेतुः। ( स्वगतम् ) शान्तिसुषमामयी धरणी। कथमत्राशान्तिर्दुःख-द्वन्द्वलोभविद्वेषाः, कथं वात्र कापट्यहिंसाकलुषाणि ? ( नेपथ्ये रत्नमञ्जरी गायति गानं करुणस्वरेण )

॥ गानम् ॥

छिन्ननीड़े जीवनतीरे वर्षन्ति केऽश्रुनीरम्।
स्वजनहीना जननी दीना याचते मृत्युतीरम्।
नास्ति बन्धुर्नास्ति त्राता
नैव सखा शान्तिदाता
आलोकहीना शून्यपुरी ईक्षते चण्डविलासम्।

विजयकेतुः। ( गीतिमाकर्ण्य ) अहो दुर्भाग्यम्! अशरणा हृतसर्व्वस्वाः शान्तिनीड़ं प्रयाचन्ते। ते हि प्राणरक्षार्थमाश्रयं सन्दधति।

प्रविश्य रत्नमञ्जरी। न केवलमेते हृतसर्व्वस्वा राजन्। एते हि वियोग-व्यथातुरा वास्तुहीना निर्म्ममाघातनिहतानां परिजनानां रक्ताक्तमृतदेहं धरातले समर्प्य प्राणरक्षार्थमिहागताः। संवहन्ति चैते स्वाङ्गेषु आततायिनां निष्ठुरप्रहारचिह्नान् धर्म्मान्धताया-स्ताण्डवेन।

विजयकेतुः। विरम विरम देवि! नातः परं क्षमोऽस्मि नराणां दुर्भाग्य-वार्त्तामाकर्णयितुम्।

रत्नमञ्जरी। नहि एतावन्मात्रम्। श्रूयतां महाराजेन। सतीनां यत्र भवति लाञ्छनम्, नारीजनेष्वनुष्ठितः पापाचारः, तत्र च भवति निर्म्ममं नरघातनम्,—किमेषैव सा शान्तिमयी पृथिवी, जीवधात्री जननी वसुन्धरा, याऽनिशं सन्तानानां रक्तधाराभिः स्रवतुं स्नपयति? हिंसाजर्जरितेऽत्र वसुधातले कुत्र हि शिष्टानामाश्रयः?

विजयकेतुः। देवि, दुर्भाग्यमेतद् परमं मानवानाम्! एषा हि कलङ्कमयी मदमत्तता मानवसभ्यतायाः गौरवं मलिनयति, विरचयति च शासकानां दुराचारस्य कुकीर्त्तिकरमितिहासम्। किन्तु कथय कल्याणि, किमत्रास्माकं परराज्यव्यापारेषु करणीयमस्तीति।

रत्नमञ्जरी। महाराज, पालय मानवधर्म्ममौदार्य्येण। वयं हि देवस्थान-वासिनोऽपरराज्यानां दुराचारस्य कं प्रतिकारमनुतिष्ठामः? तथाप्यशरणेभ्य आश्रयदानं, तेषामनाथानाञ्च परिपालनादीनि भवता साध्यानि। अतो राजधर्म्मः प्रतिपाल्यतां स्वभावमहत्त्वेन।

विजयकेतुः। देवि, उन्मोचय मम नगरद्वारमनाथेभ्य आश्रयदानाय। अद्य प्रभृति राजभवनं शरणार्थिभ्य स्थानदानाय चिरमुक्तं तिष्ठतु।

( प्रविशति मधुच्छन्दा )

प्रविश्य राज्ञी मधुच्छन्दा । महाराज, निराश्रया मानवता साम्प्रतं शान्ति-शरणं कामयते । किन्तु कः खलु परिणाम एषां छिन्ननीड़ानां वञ्चितवासविभवानां नरनारीणामिति चिन्ताकुला भवामि ।

विजयकेतुः । देवि, जानाम्येतन्नितरां यदुच्छिन्ना वल्लरीशाखेव निराश्रयो मानवात्मा विशीर्य्यति, अकूलजलधिजलेषु निमज्जति तरङ्गाहततृणराशिरिव मानवानां संस्थितिः । तथापि विश्वस्य-शान्तिरक्षार्थं, पालनार्थमाश्रितानां, स्वराज्यस्य च समृद्धये प्रयत्नमहं करिष्यामि ।

रत्नमञ्जरी । साधो महाराज ! विजयतां भवान् । एवं महिमदीप्तो भवान् देदीप्यतां राजधर्म्मपालनेन ।

मधुच्छन्दा । अहो, तृप्ताऽस्मि, मुक्ताऽस्मि चिन्ताजालात् । तदहमपि सहाया भविष्यामि ।

विजयकेतुः । अये, प्रजानां कल्याणविधानमेव मम व्रतम् । तदहं साधयामि युष्माकमानुकूल्येन । किञ्च निपीड़ितानां दुःखमोचनायैव धारयामि राजदण्डं न तु विलासव्यसनाय ।

रत्नमञ्जरी । धन्यो धन्योऽसि देव ।

( प्रविशति चरः )

प्रविश्य चरः । ( अभिवादनपूर्व्वकम् ) देव, पुनरहमागच्छामि ।

विजयकेतुः । कथय भोः वार्त्तां सीमान्तस्थलस्य ।

चरः । देव, सिन्धुकूटाधिपतिः अस्मदराज्याक्रमणाय सीमान्तमागच्छति तत्सैन्यानामपि अग्रगतेः प्रतिरोधो दीयते प्रवलपराक्रमेण अस्मत्-

सैन्यैः। एतां नवीनपरिस्थितिं विज्ञापयितुं भवतेऽत्राहं प्रेषितः।

विजयकेतुः। (स्वगतम्) एतत् प्रथममेवास्माभिर्मनसा विचिन्तितम्। यातु। (प्रकाशम्) गच्छ भद्र पुनः स्वस्थानम्। विज्ञापितव्योऽस्मत्-सेनानायको यदहमवहितोऽस्मि, व्यवस्थापयामि च यथोचितं सीमान्तरक्षणाय। तद् युष्माभिरपि सर्व्वैश्चारैः सुनिपुणं शत्रूणां गतिविधिर्निरीक्षितव्यः। कर्त्तव्यञ्च साहायकं वीर-सैन्यानाम्।

चरः। शिरोधार्य्यो देवस्यादेशः। साधयामि कर्त्तव्यम्। अधुना गच्छेयं कार्य्यसाधनाय। (वन्दित्वा प्रचलति)

विजयकेतुः। (स्वगतम्) अधुना प्रस्तुतं कर्म्मजातं सीमान्तयोः शत्रूणां दुष्कृतिबाहुल्यात्। (मधुच्छन्दां प्रति) देवि, नूनं यथायथं व्यवस्थापयति कर्म्मविधिं सीमान्तरक्षणार्थमस्मद्वीरसेनानायकः तदहमपि प्रत्यक्षतः सीमान्तदर्शनाय प्रोत्साहयितुं च सह-नायकानस्मत्सैनिकान् रणक्षेत्रं गच्छामि।

मधुच्छन्दा। (सहर्षम्) महाराज, अहमपि भवतोऽनुमतिं प्रार्थये समराङ्गन-गमनाय। ममापि देशसेविकावाहिनी शत्रूणामग्रगतिरोधार्थं युद्धायोद्यता तिष्ठति। तदनुमोदयतु प्रार्थनामत्रभवान्।

रत्नमञ्जरी। जयतु महादेवी। अहं ते आज्ञापालने चिरसमुत्सुका कालं नयामि।

विजयकेतुः। (रत्नमञ्जरीं प्रति) धन्यासि कल्याणि, विजयन्तां भवत्यः। किन्तु देवि, अत्रापि विद्यते युष्माकं महान् कार्य्यभारः। प्रयोजने सञ्जाते देशसेविकाभिरपि सीमान्तेषु प्रचलितव्यम्। अधुना राज्यमध्येऽवस्थाय क्रियतां देशप्रेमप्रचारः, कर्त्तव्यञ्च देश-रक्षार्थं नारीणां सङ्घटनकार्य्यं बाहुल्येन।

रत्नमञ्जरी । कृतार्थाऽस्मि । गच्छामि व्रतिनीसङ्घसमीपं महाराजस्यादेश-ज्ञापनाय । ( अभिवादनानन्तरं वहिर्गमनम् )

मधुच्छन्दा । ( रत्नमञ्जरीं प्रति ) देवि, धन्योऽस्मि तव सङ्कल्पेन । एष हि भवत्याः सुमङ्गलां हृदयवृत्तिं प्रकाशयति । किन्तु प्रिये, मयि सीमान्तपर्य्यवेक्षणाय सेनानायकेभ्यश्च यथोचितनिर्देशदानाय रणक्षेत्रसमीपवर्त्तिनं गिरितटं प्रस्थिते राज्यस्य शान्तिरक्षार्थं प्रजानाञ्च निरापत्ताव्यवस्थापनार्थं त्वयात्रावस्थातव्यम् ।

मधुच्छन्दा । बहुमानितास्मि महाराजेन । किन्तु कथमेकाकिनी सर्व्वं साधयिष्यामीति चिन्ता जायते ।

विजयकेतुः । अलं व्याकुलतया । नयनिपुणा अमात्यार्य्यास्ते सहायास्तिष्ठन्ति । अहमपि कृत्यं समाप्याचिरकालेन प्रत्यागमिष्यामि । अतो देव्या रत्नमञ्जर्य्याः साहचर्य्येण पौराः प्रतिपाल्यन्ताम् । रक्ष्यन्तां चाशरणाः प्रयत्नेन क्रियतां च संरक्षणं राज्यस्य ।

मधुच्छन्दा । जयति महाराजः । एषाहं साधयामि व्रतमानन्देन ।

( निष्क्रान्ता )

( प्रविशति राजकविः सुधाकण्ठः )

सुधाकण्ठः । विजयतां महीपालः ।

विजयकेतुः । ( उपसृत्य सादरम् ) स्वागतं कविवर्य्यस्य । यथाकालं त्वां संप्राप्नोमि । तदत्रोपविश्यतामानन्देन ।

सुधाकण्ठः । ( सहर्षम् ) धन्योऽस्मि राज्येश्वर । भवतोऽतुलनीयानुरागेणाहं चिरकृतार्थः । तत् किमहमशेषगुणगरीयसो महामहिम्नो भवतो माहात्म्यं वर्णयामि ? नूनं निखिला राज्यश्रीर्गुणमुग्धा भवन्त-मेव सुखायाश्रयते ।

विजयकेतुः । धन्योऽसि धीमन् । किन्तु कवे, नायं प्रशस्तिवादस्य समयो येन खलु विदग्धाः कवयोऽपूर्व्वप्रतिभाबलेन नृपाणां चित्तं विनोद-यन्ति । एतावत्कालं स्वभावमाहात्म्येन मनोरमा विचित्र-कथामाला सुललितच्छन्दसा संग्रथिता कविगणैः कल्पना-

विलासैश्च सुरञ्जितानन्दवर्द्धनाय। परमधुना तु वास्तवजगतां सुखदुःखान्येव भवन्तु वो वर्णनाविषयाः समाधानार्थं समस्यानाम्।

सुधाकण्ठः। सत्यमेतद् राजन्, तत् कल्पनासरोवरेषु चिरं विहरन्तः कवीनां चित्तराजहंसाः केवलमलौकिकस्वर्णकमल्यानेव समाहृत्य समुपहरन्ति स्म जनचित्तविनोदनायेति। श्रान्ते क्षुण्णे च नरमानसे आनन्दसमुद्दीपनमेवासीत् तेषां लक्ष्यविषयः।

विजयकेतुः। तदेव कथयामि। हे वागीश, आकर्णितास्माभिस्त्वकण्ठोदीरिता बहुविधा ललितकाव्यकाहिनी। अधुना तु ऋजुकुटिलगत्या विचित्रं द्वन्द्वसंघातपूर्णं राजन्यानां जीवनम्। राजनीतिः साम्प्रतं बलात् प्रभावयति जनचेतांसि, विभ्रामयति च सामयिकद्वन्द्वसमवायो भूयिष्ठं मानवच्चित्तम्। अतोऽधुना वास्तवविषय-एव भवतु काव्यानामालोच्यप्रसङ्गः।

सुधाकण्ठः। सोऽपि मया नोपेक्ष्यते। श्रूयतां महाराजः। न हि केवलं कल्पलोके विहरन् कविर्नन्दनकाननमाधुर्य्येषु निमज्जति। सुख-दुःख-पाप-पुण्य-जय-पराजयविचित्रां मानवजीवनयात्रामपि वर्णयति काव्यविलासी जनानामवबोधनार्थम्।

विजयकेतुः। (सकौतूहलम्) ततस्ततः?

सुधाकण्ठः। राजन्, प्रेमविरहसङ्कुलमुत्थानपतनविधुरं हि मानवजीवनम्। आलोकान्धकारमयो हि मनुष्यजीवनस्येतिहासः। मम वीणा तत्सत्यमेवोद्गायति।

विजयकेतुः। (साग्रहम्) वाच्यतां बन्धो। श्रोतुमिच्छामि ते सत्यार्थ-संवलितं जीवनकाव्यम्। तेन श्रावय तेऽधुनातनरचनांशम् कौतूहलापनोदनाय।

सुधाकण्ठः । (सहर्षम्) श्रूयतां श्रीमन् । वाचयामि कविताम् ।

(आवृत्तिं करोति)

विश्वे गर्ज्जति तूर्य्यनादमुखरा संग्रामडङ्का भृशं
हिंसान्धाः परिपीड़यन्ति वसुधां कापट्यकूटान्विताः ।
शिष्टाः सन्ततपीड़िता धनमदः साम्राज्यलुब्धैर्नरैः
शान्ता मारणवाणचकिताः शङ्काकुलः सज्जनः ॥

विजयकेतुः । (सानन्दम्) अहो मधुरं मधुरम्! विकसति तव कविता-शतदलमपूर्व्वमाधुर्य्येण । तत् कविवर, अधुना विरचयतु भवान् नवीनतरामुद्बोधनगीतिकां जनानां महाजागरणाय । भवदीयैषा वीणाधुना सर्व्वकलुषमपहृत्य प्रचारयतु मुक्तिमन्त्रं प्रसुप्तजीवनस्य ।

सुधाकण्ठः । धन्योऽस्मि देव, भवतः करुणाप्रसादेन । विरचिष्यामि अतः-परं नवीनं जीवनसंगीतम् । सर्व्वाकल्याणमुक्तो मानवात्मा, तेन आनन्दामृताभिषिक्तश्चिरं शान्तिसौख्यमास्वादयिष्यति ।

समाप्तं चतुर्थं दृश्यम्

इति पञ्चमोऽङ्कः

## षष्ठोऽङ्कः

### प्रथमं दृश्यम्

(गहन्-हिमाचलशिखरवर्त्ती आश्रमः—निभृतगुहासु तपः समाचरन्ति दिव्यमूर्त्तयस्तपस्विनः । तद्बहिः परिश्रान्तो नैराश्यक्लिष्टः सनातनः शिलातलासीनो ध्यानाविष्टस्तिष्ठति—ऊर्द्ध्वेऽसीमं नभः, अधश्च श्यामला कुसुमाम्बरा धरित्री—समन्ताद् विराजते गभीरा निस्तब्धता—वन-विहगाः कूजन्ति, प्रपतति च पार्श्वतः कलरवमुखरा फेनिलनिर्झरधारा ।)

सनातनः । (ऊर्द्ध्वमवलोक्य) विश्वजननि, केयं लीला तव भुवनेषु? शान्तिशीतले तव वक्षसि नास्ति सन्तानानामाश्रयः?

(सोच्छ्वासम्) कथमियं हिंसा प्रवञ्चना, कथञ्चयं दुर्मदो राज्यलोभः? अहो, धिगिमां कुटिलां राजनीतिं, या जनान् शान्तिनिलयादुत्सादयति, रञ्जयति च धरातलं नरशोणितेन! देवि, कथं दुर्मदानां रणताण्डवं भूतलेषु?

(प्रविश्याश्रमाभ्यन्तराद् ब्रह्मानन्दभारती)

ब्रह्मानन्दः। (सनातनं प्रति) वत्स, कामुद्दिश्य करुणमावेदयसि?

उत्थाय सनातनः। (ससम्भ्रमम्) देव, या हि विश्वजननी सृष्टिस्थितिलयकारिणी, तस्यै ममार्त्तिं निवेदयामि।

ब्रह्मानन्दः। का ते आर्त्तिः? कथं वा दुःखं तात?

सनातनः। देव, निपीड़ितानां दुःखभारमुद्वहन्नत्रागतः।

ब्रह्मानन्दः। किन्तु के वा तवावेदनमाकर्णयिष्यन्ति?

सनातनः। आर्य्य, श्रुतं मया देवतात्मा हिमालय इति। अत्र च निखिलदैवतमधितिष्ठतीति। अतस्तानुद्दिश्यात्र हृदयाभिलषितं निवेदयामि।

ब्रह्मानन्दः। किं वा तेऽभिलषितम्?

सनातनः। देव, दुःखानां प्रतिकारमहं प्रार्थये। किं न विरमेदतो दुर्मदः साम्राज्यलोभः, यो हि प्रज्वालयति समरानलं विश्वेषु? अद्य विलसन्ति राज्येषु हिंसा, प्रवञ्चना, निरीहानाञ्च प्रपीड़नानि। तन्नास्ति किमेषां कलुषाणामवसानं विश्वमङ्गलाय?

ब्रह्मानन्दः। (सस्मितम्) तात, एष खलु युगधर्म्मो मानवसभ्यताया विनाशमानयति। स हि मनुष्याणां हृदयवृत्तिं मलिनयति, विलोपयति च सौभ्रात्रम्। किञ्च पापराक्षसोऽद्य विश्वग्रासाय समन्ताद् विलसति।

सनातनः। देव, तदेवावलोकयामि। पश्यामि तावदधर्म्मः प्रभवति। तेन नराणां दुर्द्दमोऽर्थलोभः। सङ्कीर्णता, स्वार्थपरता, मिथ्या, शठता, प्रवञ्चना तथा शक्तिमद्भिर्दुर्बलानां प्रपीड़नानि च कुर्व्वन्ति

जयोल्लासम्। अतः किं न पुनर्भविष्यति प्रेम्णोऽभ्युदयो येन विच्छिन्ना मानवात्मानः परस्परस्नेहसंवद्धा आनन्दमास्वादयिष्यन्तीति ?

ब्रह्मानन्दः। तात, चक्रनेमिक्रमेणायान्ति भुवि सुख-दुःखानि। पाप-पुण्ययोश्चैव एवंविधः पर्य्यायक्रमः। अधुना प्रभवति पापताण्डवं जगति स्वभावधर्म्मेण।

सनातनः। तत् कथं भवेदस्यावसानं तद्देवोपदिश्यतामनुग्रहेण।

ब्रह्मानन्दः। अभयम्। क्रियतां कृच्छ्रसाधनं पापनाशाय। उद्याप्यतां मङ्गलव्रतं देवानां कृपालाभाय। तेन विश्वदेवता प्रसन्ना भविष्यति।

सनातनः। आर्य्य, नाद्यापि विश्वदेवी प्रसीदति। न वा सा दर्शनमागच्छति। तत् किं दैवतानि नाकर्णयन्त्यार्त्तानां करुणविलापध्वनिं श्रोत्रेण ? किं वा दिव्यलोके विहरन्तो देवा अमृताशना मर्त्यलोकस्य विपर्य्ययमुपेक्षन्ते ? तदहं विज्ञातुमिच्छामि।

ब्रह्मानन्दः। वत्स, एष युगक्रमो विश्वप्रपञ्चलीलासु ! देवा अधुना योगनिद्रामाश्रयन्ते। प्रसुप्तोऽधुना देवलोकः। तेन देवतात्मा हिमाचलोऽपि समाधिलीनो निद्राति।

सनातनः। कदा नु जागरिष्यति देवलोकः ? कदा नु सुप्तिं त्यक्ष्यन्ति अमराः ? कथ्यतां तद्विवरणम् देव !

ब्रह्मानन्दः। यदा हि त्यक्ष्यन्ति मर्त्यवासिनो मोहनिद्राम्, उदेष्यति च मानवहृदयेषु सौभ्रात्रं, तदैव मिलितमर्त्यकण्ठानां प्रार्थनागीतेन सम्भवेद् देवानां निद्राभङ्गः। देवता तदा जागरिष्यति।

सनातनः। किन्तु देव, नाद्यापि दृश्यते शुभलक्षणम्। विस्मरन्ति स्वदेशीया देशप्रेम। ते हि युगयुगान्तरागतां ज्ञान-धर्म्म-प्रेम-तपःप्रदीप्तां स्वकीयसभ्यतां निन्दन्ति, परिहरन्ति च सदाचारम्। परञ्च ते हि भगवद्विमुखा ईश्वरमस्वीकुर्व्वाणा अनुकुर्व्वन्ति परदोषम्।

संयममुच्छिद्य भजन्ते ते भोगविलासम्, प्रीतिं श्रद्धां स्नेहं शुभेच्छां च सन्त्यजन्ति ।

ब्रह्मानन्दः । धीमन्, एष हि प्रलययुगस्य विलासः । अधर्म्मस्याभ्युदय-विनाशार्थमेते विलसन्ति साम्प्रतं प्रणाशाय ।

सनातनः । किं बहुना देव ? बहवोऽधुनान्यायेनार्थसञ्चये प्रलुब्धाः । असमीचीनधनलालसया पण्यजीविनो द्रव्यसङ्गोपनेन कृत्रिम-पण्याभावं सृष्ट्वा क्रमतः पण्यमूल्यवर्द्धनेन प्रपीड़यन्ति गृहिणः ; प्रवञ्चयन्ति च स्वदेशीयान् द्रव्येषु निकृष्टवस्तुमिश्रणेन । एव-मन्यायसिद्धानां सन्त्यक्तमानवधर्म्माणां मर्त्यानां चित्तप्रबोधनं दुःसाध्यं भवति ।

ब्रह्मानन्दः । अलं नैराश्येन वत्स । मा त्वं क्षोभं गच्छ । साम्प्रतं चिर-मारब्धं महाजनैर्विश्वमङ्गलव्रतम् । ते हि स्वदेशस्य कल्याणार्थं तपस्यन्ति । तत् त्वयापि स्वदेशस्य दुःखनाशाय व्रतमुद्-यापनीयम् ।

सनातनः । एतद्व्रतमेव साधयामि देव । किन्तु नहि पश्यामि सिद्धिलक्षणम् । तेन मोहग्रस्तानां स्वदेशीयानाञ्च प्रबोधनं दुःसाध्यमाभाति ।

ब्रह्मानन्दः । मैवम् । कथं संशयः ? व्रतसाफल्यं तु कृच्छ्रां तपस्यामन्वा-गच्छति । द्रक्ष्यसि किम् ? तदनुसर माम् ।

( ब्रह्मानन्दः प्रचलति, सनातनस्तमनुगच्छति । भवति दृश्य-परिवर्त्तनम् । अपसरति पटी । दृश्यते गुहामध्ये व्याघ्रचर्म्मासनाः स्थाणुकल्पा योगिनो ध्यानम् कुर्व्वन्तीति—ब्रह्मानन्दो द्वारतो-ऽङ्गुलिनिर्द्देशेन सनातनं तान् प्रदर्शयति ।—विराजन्ते च तपस्विनां पुरतो होमवेदिकानलः कमण्डलुप्रभृतयश्च । )

ब्रह्मानन्दः । निरीक्ष्यतां वत्स ! अवलोकय दृश्यम् । ( सनातनो विमुग्धः पश्यति ] किं पश्यसि ?

सनातनः । समाधिमग्नांस्तापसानवलोकयामि देव !

ब्रह्मानन्दः । अपि जानासि किमेषां व्रतमिति ?

सनातनः । भवानेवापनयतु कौतूहलम् कारुण्येन ।

ब्रह्मानन्दः । शृणु वत्स । इमे खलु महान्तस्तपोधना वयसा जीर्णतमा लोलदेहा अपि सुदृढाङ्गप्रत्यङ्गापूर्वशक्तिसमन्विता व्रतपरायणा तपः समाचरन्ति । स्वदेशस्य मुक्तिलाभाय परमश्रेयसे चैते विश्वदेवीमाराधयन्ति !

सनातनः । अहो अपूर्व्वम् !

ब्रह्मादन्दः । श्रूयतां पुनः । अत्र गहनगिरिगुहायां प्रवर्त्तते विश्वमङ्गलार्थं महद्व्रतम् । एषां महातापसानां तपश्चरणं युष्माकं साधनसम्पद्भिर्युक्तं महत्कल्याणमुद्भावयिष्यति ।

सनातनः । नमोऽस्तु गुरुमण्डलीभ्यः [ उद्देशेन प्रणमन्ति ] जन्मभूमेदुःखमोचनार्थं जगदीश्वरीं प्रार्थयमानाश्चैते महात्मानश्चिरं नमस्याः । तदहमेतान् नमस्यामि । [ पुनर्नमस्करोति ]

ब्रह्मानन्द । न केवलमेतन्मात्रं वत्स । व्यावृत्य पश्य । उपसृत्यावलोकय दृश्यान्तरम् । (ब्रह्मानन्द उपसर्पति, सनातनोऽनुगच्छति )

[ दृश्यपरिवर्त्तनम्—दिङ्मण्डलमालोकयन्ती शोभतेऽपूर्व्वा देवीमूर्त्तिः । ब्रह्मानन्दः सनातनायाङ्गुलिनिर्द्देशपूर्व्वकं देवीमूर्त्ति प्रदर्शयति ]

उपसृत्य ब्रह्मानन्दः—वत्स, पश्यैनां दिव्यालोकसमुद्भासितदिङ्मण्डलां देवीमूर्त्तिमानन्देन ।

सनातनः । अपूर्व्वम् ! केयमत्र महादेवी देव ?

११

ब्रह्मानन्दः। इयं हि महाशक्तिस्वरूपिणी मङ्गलमयी जगन्माता भक्तानुग्रहार्थं स्वरूपेण तिष्ठति। चिन्मयी विश्वधात्री विश्वरूपा परमेश्वरीयं भक्तजनैश्चिरमाराध्यते। तत् प्रणम मातरम्।

सनातनः। वन्दे मातरम् [ देवीमुद्दिश्य प्रणमति ]। अहो, करुणामयी विश्वमाता करतलेऽन्नपात्रं विधृत्यान्नं वितरति। योगिजनानुध्याता भक्तानुग्रहकारिणीयं हरति मे विषादमभयमङ्गलदृष्टिपातेन।

ब्रह्मानन्दः। एषा हि अस्मद्देशजननी, सर्व्वदैवतमयी जीवधात्री वसुन्धरा अभिनव-कमनीयरूपेणात्र विलसति।

सनातनः। किन्तु देव! किमिदमत्र पश्यामि? मातुर्वक्षसि, शोभते शोणितरञ्जिताघातरेखा! सा हि अनर्घ्यरत्नोज्जलकान्तिनिर्झरमालिनी पुष्पिता वनभूमिरिव करुणादृष्टिं विकिरति।

ब्रह्मानन्दः। साधो वत्स! पश्यैनां योगिजनदुर्ल्लभां मातृमूर्त्तिमपलकनेत्रेण। एषा हि ज्योतिर्म्मयी करुणामृतरसविग्रहा निखिलदेवात्मिका महाशक्तिर्यस्या दर्शनलाभो भवद्भिराकाङ्क्ष्यते। अतो वन्दस्वैनाम्। निवेदय च मनसामावेदनम्।

सनातनः। (प्रणम्य प्रार्थयते) वन्दे जगज्जननीम्। देवि प्रसीद। रक्ष सन्तानचयम्। (प्रकाशम्) अहो, विश्वमाता सन्तानानां दुःखहरणाय लीलयात्र रूपान्तरं गृह्णाति।

ब्रह्मानन्दः। किं पश्यसि रूपान्तरं तात?

सनातनः। पश्यामि ब्रह्मन्, ध्यानमूर्त्तिं मे विस्मयानन्देन। इयं हि शैलकिरीटिनी काननकुन्तला निर्झरप्रान्तरमालिनी देशमाता फलजलशस्यजातैः सन्तानान् पालयति, रक्षति च वराभयदानेन। अहो, चरणकमलमस्याश्चुम्बति नीलाम्बोधेस्तरङ्गमाला। शीर्षे च विराजते तुषारकनकांशुरञ्जितं गिरिमुकुटम्। देव, धन्योऽहं देवीदर्शनेन।

ब्रह्मानन्दः। अस्त्येतत् सर्व्वम्। अधुना प्रतिगच्छ स्वपुरम्। कुरुथ सर्व्वथा आत्मनिवेदनं महादेव्या वरलाभय। प्रचारय च सन्देशं जनेभ्यो यद् विश्वमाता सन्तानानामात्मोत्सर्गमिच्छतीति।

सनातनाः। (प्रणम्य) नमोऽस्तु भवते। अधुनाहं प्रतिगम्य साधयिष्यामि महाव्रतमात्मनिवेदनेन, यथा देवी प्रसन्ना वरं ददातीति।

ब्रह्मानन्दः। (आशिषं करोति) विजयस्व वात सिद्धिलाभेन। व्रतं वै सफलमस्तु।

इति षष्ठाङ्के प्रथमं दृश्यम्।

## द्वितीयं दृश्यम्।

(देवस्थान-राजप्रासादः—स्वकक्षे विजयकेतुश्चिन्तामग्नस्तिष्ठति।)

विजयकेतुः। (स्वगतम्) क्लेशकरोऽयं राजत्वविलासः! लक्षजनानां चिन्ता मां पीडयन्ति। वहिःप्रान्ते शत्रवः समरायोजनं कुर्व्वन्ति। अभ्यन्तरे च देशद्रोहिणां राष्ट्रद्रोहात्मको गूढकार्य्यकलापः। शत्रूणामाक्रमणेन, पण्यजीविनामसाधुधनार्ज्जनकौशलेन क्लिश्यन्ते देशवासिनः। कथमहं राज्यरक्षां करोमि?

(प्रविशत्यमात्यः)

प्रविश्यामात्यः। जयतु महाराजः। कथं त्वां चिन्तामलिनमवलोकयामि?

विजयकेतुः। आगम्यताममात्यवर्य्येण। उपविश्यताम्।

(अमात्यः पार्श्वे उपविशति)

अमात्यः। धीमन्, वीरस्त्वं तेऽतुलनीयमिति ख्यातिमापद्यते। वश्याश्च तव गुणमुग्धाः प्रजाजनाः। किञ्च सर्व्वथानुगताश्च सेनापालाः शत्रूणामुत्सादनाय नैपुणयेन प्रचेष्टन्ते। तदलमुत्कण्ठाक्लेशेन वीर!

विजयकेतुः। मन्त्रिवर, किं न दृश्यते भवता स्वदेशीयानां दुरवस्था? विपक्षीयानां देवस्थानाक्रमणजनितसमरविपाकेन क्लिश्यन्ते

शान्तिप्रिया राज्यवासिनः। किञ्च पुनरन्तःशत्रूणां राष्ट्रविरुद्धं कर्म्मजातं विचिन्त्य नितरां खिद्यामि।

अमात्यः। देव, मूढ़ास्तु कुमन्त्रणाकारिणस्तमोहता निद्राच्छन्ना इव। नास्ति तेषां देशप्रेम, विवेकविचारी वा। किन्तु तस्कराणां कियान् खलु प्रभावः? नूनं दुष्कृतिकारिणां दमनाय भवतो महिमोद्दीप्तो राजदण्डः पर्य्याप्तः। स हि अस्माकं सुनिपुनीतिमनुसृत्य पापनाशाय प्रयोक्ष्यते।

विजयकेतुः। अहो, मनोबलं प्रापितोऽस्मि। भवतां सुनिपुणनयप्रयोगेषु वर्त्ततेऽस्माकं दृढ़प्रत्ययः। तद् देवस्थानस्य चिरशुभाकाङ्क्षिणां भवादृशां समर्थनं कर्त्तव्यपरिपालनञ्च मामुत्साहयतः।

अमात्यः। साधु वीरवर्य्य! किन्त्वरातयो द्वारदेशे नितरामास्फालयन्ति। स्पर्द्धन्ते च लोभोन्मत्ताः प्राङ्मित्रस्थानीया राजानो राज्या-क्रमणाय। अधुना लब्धीकर्त्तव्यस्तेषां समरोल्लासो यथोचित-वीर्य्यप्रयोगेन। नूनं शस्त्रेण प्रतिहन्तव्योऽयं हिंसोद्दीप्तः शत्रूणां समरोल्लासः।

विजयकेतुः। धन्योऽस्मि नीतिमन् भवतां प्रेरणादानेन। सर्व्वथा विजयते भवान्। नन्वचिरेणैव दुःखमुक्तं विलसतु राज्यं विजयश्रीमण्डितं वीराणां वीरत्वेन।

अमात्यः। जयतु वीरः। अधुना निश्चिन्तमनुष्ठीयतामुत्साहेन कृत्यजातम्। अहमपि यथोचितसाधनाय गच्छामि।

(अमात्यः प्रस्थानं करोति)

उत्थाय विजयकेतुः। अधुना प्राप्तबलोऽहमालोकं पश्यामि। तद् विजयता-मचिरेण प्रयुक्ता सुनयमण्डितामात्यप्रवरस्य ज्ञानगर्भा राजनीतिः। सा हि कुशलाय भवति।

(प्रविशति राज्ञी मधुच्छन्दा)

मधुच्छन्दा। महाराज!

विजयकेतुः । आगच्छ देवि ! यथाकालमत्र भवतीं सम्प्राप्नोमि । तत् क्रियतां मे साहाय्यकमनुकूलसाधनेन । (स्वयमुपविशति समुपवेशयति च राज्ञीम् पृथगासने । )

मधुच्छन्दा । नाथ, यो हि चिन्ताभारस्त्वां क्लेशयति, स हि मामपि पीड़यति । नाहं निर्वृतिं गच्छामि ।

विजयकेतुः । (सस्मितम्) प्रिये, निरर्थकोऽयं समुद्वेगो यो हि मनः-प्रसादमपहरति । जानामि देवि, यद् दुर्द्धर्षो राज्यपरिचालन-भावः अपनयति विश्रामसौख्यम् । तथापि सोऽतिक्रमणीयः । विशेषतः प्रजानां जननी त्वं सन्ततं मम सहायभूता विराजसे इत्येव मे मनोवलं वर्द्धयति ।

मधुच्छन्दा । धन्योऽसि प्रजापाल । वीरधर्म्मस्त्वं सर्व्वथा विजयस्व सुचिरं गौरवेण । किन्तु देव !

विजयकेतुः । कथय प्रिये मनोगतम् । शोभनं ते चरित्रमाहात्म्यं सदैव मे ग्लानिं विदूरयति । तत् स्वाच्छन्द्येन प्रोच्यतां ते हृद्‌गतोऽनु-भावः कौतूहलनिवारणाय ।

मधुच्छन्दा । देव ! स्मरामि कैशोरजीवनम् । पश्यामि स्मृतिचित्रं गन्धर्व्व-नगरस्य । सा हि आनन्दविगलिता शैलप्रवाहिणी, तद्धि दिव्यसुषमामण्डितमप्सरः-किन्नर-गन्धर्व्वाणां क्रीड़ानिकेतनमुमा-महेश्वरतीर्थक्षेत्रं, सर्व्वमेव सुखायासीत् । अधुना तु रत्नसिंहासनमत्र कण्टकाय भवति । एषा हिंसोन्मत्ता पृथ्वी निखिलानन्द-मपहरति ।

विजयकेतुः । देवि, जानामि सत्यं यद् राजत्वं न हि विलासाय भवतीति । एतद्धि महाव्रतं प्रजापालनार्थं निखिलजनानां सौख्यसाधनाय च दैवेच्छयापतति । नाहमतः आत्मसुखाय स्पृहयामि ।

मधुच्छन्दा । किन्तु राजन्, शत्रुभिराक्रान्तो राज्यप्रान्तः । अन्ये च पूर्व्वसुहृदः प्रतिकूलमाचरन्ति । अस्मान्महासङ्कटात् केनोपायेन प्रजाः रक्ष्यन्ते ?

विजयकेतुः । जानामि प्रिये, सर्व्वं प्रातिकूल्यमधुना स्वधर्म्मपालनं मे व्याघातयतीति । तथापि प्रजानां मङ्गलार्थं सर्व्वे क्लेशा मम वरणीयाः । कथमहं शत्रुहस्ते राज्यं समर्पयामि ? अतः सर्व्वात्मत्यागेनापि मया जन्मभूमी रक्षणीया ।

मधुच्छन्दा । मयापि नाथ, सानन्दं व्रतमेतद् गृहीतम् । किन्तु प्रतिवेशि-नृपाणां हिंसाकुटिलान्याचरणानि विलोक्य राजत्वगौरवं प्रति श्रद्धाहीनास्मि । एते च राजत्वविलासिनः । शान्तमानवाना-मनन्तदुःखकारणानि भवन्ति । दुर्मदमत्ततयैते जनानुत्सादयन्ति, शिष्टान् प्रपीड़यन्ति, लङ्घयन्ति चैवं राजधर्म्मं परराज्याक्रमणेन । तेन राजत्वं मे दुःखाय सम्पद्यते ।

विजयकेतुः । देवि ! अधीश्वरी त्वं स्वराज्यस्य, प्रतिपालिका लक्षप्रजानाम् । अतः पालय मातृधर्म्ममसहायानां रक्षणेन । मा भूत्ते नैराश्यम् । अस्माकं वीरसैनिकाः शत्रूणां पराजयसाधनार्थं प्रचण्डपराक्रमेण युध्यन्ते । तत् त्वमपि रत्नमञ्जरीसहाया राज्यरक्षणेऽत्र व्रतपरा भव ।

मधुच्छन्दा । आश्वस्ताऽहं प्रिय तव वीरवचसा । नाहमतःपरं नैराश्यमुप-गच्छामि । यतो धर्म्मस्ततो जय इति महाजनवाणीं संस्मृत्य सेवाधर्म्मं परिपालयिष्यामि आनन्देन ।

विजयकेतुः । ( सहर्षम् ) अभिनन्दयामि राज्येश्वरीम् । कृतार्था भव व्रत-साधनेन । एवं यथायथं राजधर्म्मपालनेन श्रीवर्द्धनेन च राज्यस्य, मम सहायभूता सफलय राज्येश्वरीगौरवम् ।

मधुच्छन्दा । धन्यास्मि शुभनियोगेन । देशहितव्रता मे देशसेविका राज्यस्याभ्यन्तरीणशान्तिरक्षार्थं साधनाय च सेवाव्रतं जनानां समुद्यतास्तिष्ठन्ति । किन्त्वस्मिन् महासङ्कटे यथोचितसाहाय्य-लाभाय पिता नः प्रार्थनीयः । अतः प्रेष्यतां पितृसकाशेऽस्मत्-साहाय्यहेतोरावेदनम् ।

विजयकेतुः। अलमुत्कण्ठया। सर्व्वं विज्ञापितस्तत्रभवान् प्रागेव। नूनं सोऽपि अस्मच्चिरशुभार्थी रणाङ्गने शत्रुदमनायानुकूल्यं कुरुते।

मधुच्छन्दा। (स्वस्ति निःश्वस्य) अहो, स्वस्थतां गतास्मि। वयं जयलाभाय यतिष्यामहे।

(प्रविशति सखीद्वयं—मधुपर्णा कलस्वना चेति)

प्रविश्य कलस्वना। देवि, वेला वर्द्धते। अतिक्राम्यति च पूजासमयः।

मधुच्छन्दा। (स्वगतम्) सख्यौ मे मन्दिरगमनार्थं प्रतीक्षतः। (प्रकाशम्) प्रचल्यतां भोः। एषाहमागच्छामि। (राजानं प्रति) वद राजन्, त्वयापि प्रवर्त्तितव्यं माध्याह्निकेषु।

(सहसखी प्रचलति)

विजयकेतुः। (समुत्थाय) तथास्तु। अधुनाहं जयलाभार्थं सर्व्वथात्मानं नियोजयिष्यामि। पुण्यभूमिरियं देशमातृका जन्मभूमिः प्राणव्ययेनापि रक्षणीया। अतो नमामि देवस्थानम्।

(प्रस्थानं करोति)

इति षष्ठाङ्के द्वितीयं दृश्यम्।

## तृतीयं दृश्यम्

(प्रवहति देवगङ्गा स्रोतस्विनी—तत्तटे विहरति कविः सुधाकन्ठः)

सुधाकण्ठः। इयं हि कवि-तापस-वीरेन्द्रप्रसूतिरस्माकं जन्मभूमिस्तपोभूमिश्च साधकानाम्। विराजतेऽतःपरं समुन्नतशैलसानुदेशे सुषमाविमण्डितं गन्धर्व्वनगरम्। तत्र हि देवयोनयो विहरन्ति। किञ्च स्वर्गलोकाद् विगलितामृतमयी स्रोतोधारा भूमिमिमां पुण्याभिषिक्तां करोति।

(प्रविशति रत्नमञ्जरी)

प्रविश्य रत्नमञ्जरी। कविवर, अत्र किं कल्पनाचित्रमङ्कयसि?

सुधाकण्ठः। देवि, आगच्छ आगच्छ। स्वप्नमयी जन्मभूमेरनिन्द्यशोभा नयनमानसं मे उन्मादयति।' अहं तामेव विलोकयामि।

रत्नमञ्जरी। धन्योऽसि काव्यकलाविलासिन्! मर्त्योऽपि मनोरमे कल्पना-लोके विहरति भवान्। परं मयापि दृष्टमपरं स्वप्नचित्रं, तदहं कथयामि।

सुधाकण्ठः। कथ्यतां भद्रे। समुत्सुकोऽस्मि तदाकर्णयितुम्।

(प्रविशति सनातनः)

प्रविश्य सनातनः। अयमहमागच्छामि। ममापि वर्त्तते कौतूहलः श्रवणाय वृत्तान्तम्।

सुधाकण्ठः। (सहर्षम्) स्वागतं मित्रवर्य्यस्य। तद् आगच्छ, इह तरु-तलमाश्रयामः। श्रोष्यामश्च युष्मत्परिक्रमविवरणमानन्देन।

रत्नमञ्जरी। मधुरम्!

सनातनः। उत्तममुत्तमम्। एषा सुशीतला तरुच्छायास्मान् सादरमभ्यर्थ-यति। तदत्र सुखेनोपविशामः।

(सर्व्वे गत्वा तरुतले उपविशन्ति)

रत्नमञ्जरी। साधु साधु। सुशोभनमेतत् स्थानं सुखकरं भवति।

सुधाकण्ठः। (रत्नमञ्जरीं प्रति) उच्यतां देवि श्रुतिमधुरस्तव स्वप्नवृत्तान्तः। स हि कौतूहलमुद्दीपयति।

रत्नमञ्जरी। श्रूयतां भवद्भिः। दृष्टं मया स्वप्नयोगेनापूर्व्वमपरमालेख्यम्। तदहं वर्णयामि।

सनातन-सुधाकण्ठौ। (सहर्षम्) अहो सुखं सुखम्!

रत्नमञ्जरी। एवमस्तु। स्वप्नेऽहं सरित्तटं सम्प्राप्ता। दूरतस्तदा स्रोतस्विन्या अपरतीरे स्तिमितश्चन्द्रालोको हसति।

सुधाकण्ठः। ततस्ततः?

रत्नमञ्जरी। तत्रैकोऽपूर्व्वा नारी दिङ्मण्डलमुद्भासयन्ती मम दर्शनमागता।

सनातन-सुधाकण्ठौ। ततः किम्?

रत्नमञ्जरी। सा च करुणाभयमङ्गलदर्शना मानसं मे समाचकर्ष। कारुण्यामृतमयी चासौ अपूर्व्वा देवीमूर्त्तिः करतलेऽन्नपात्रं संस्थाप्यान्नं वितरति क्षुधार्त्तेभ्यः। पदतले तस्याः केचिदर्पयन्ति पुष्पजातम्, संवर्द्धयन्ति च तां वन्दे मातरमिति मन्त्रेण।

सुधाकण्ठ-सनातनौ। अपूर्व्वमपूर्व्वम्! ततस्ततः?

रत्नमञ्जरी। सा हि अनर्घ्यरत्नदामसमुज्ज्वला वक्षसि शोणितरेखाविदीर्णकान्तिः गैरिकस्रोतोधाराविदीर्णा पुष्पिता वनभूमिरिव करुणादृष्टिं विकिरति।

सुधाकण्ठः। ततश्च?

रत्नमञ्जरी। ततश्च समुत्थितस्तस्याश्चरणयुगलं परिवृत्य समवेतानामार्त्तानां करुणविलापध्वनिः प्राणरक्षणाय। अन्तराले च निस्तब्धवनप्रान्तरं मुखरीकृत्य विलसितः पिशाचानां हास्योल्लासः।

सुधाकण्ठः। अपूर्व्वभावात्मकोऽयं स्वप्नवृत्तान्त एष विस्मयमुत्पादयति।

सनातनः। (सुधाकण्ठं प्रति) सखे, स्वप्नोऽयं ममापि वास्तवदर्शनेन सङ्गच्छते। कथयामि तम्—अनन्तरम् अत्र किं ते वक्तव्यमिति श्रोतुमभिलषामि।

सुधाकण्ठः। प्रिय, मनोरमासु विश्वप्रकृतिषु योऽवारितरूपच्छविर्विलसति, स हि सत्यार्थमाश्रयते। तेनैव मम वीणायां सङ्गीतशतदलानि विकाशन्ते। प्रचारयामि तद् आनन्दविषादकरुणं सङ्गीतकं भुवनेषु।

रत्नमञ्जरी। धन्योऽस्ति भवान्। (सनातनं प्रति) तद् धीमन् संवर्ण्यतां ततो भवदीयसत्यार्थदर्शनवृत्तान्त आनुपूर्व्वेण।

सनातनः। श्रूयताम् भद्रे। परिक्रान्ता मया देवतानां कृपालाभार्थं तुषारमण्डिता निस्तब्धा हिमाचलप्रदेशाः। तत्र लतापल्लवच्छाया-सुशीतलासु गहन-गिरिगुहासु तपस्यन्ति ध्यानसमाहितास्तप-स्विनः।

सुधाकण्ठ-रत्नमञ्जर्यौ। अपूर्वमाख्यानम्। ततश्च श्रोतुं कौतूहलो जायते।

सनातनः। श्रूयतामतः परम्। तेषां तपस्विनां समुन्नतमौलितटविलम्बितं शुभ्रपाण्डुरजटाजालं धरातलं विचुम्बति। अर्च्चयन्ति च पवित्रदर्शनास्तानम्लानपुष्पस्तवकैः मनोहरगीतिगाथनेन च सिद्धगन्धर्व्वकिन्नरादयः।

रत्नमञ्जरी। अहो पुण्यम्! ततश्च?

सनातनः। ततश्च गुरुणा कृपयाहं प्रदर्शितैका अपूर्व्वदर्शना महादेवी। उद्भासितं नभोमण्डलं तस्या मुकुटरत्नप्रभाजालेन। समुद्-भासिताश्च निखिलाः शैलतटा स्तदीय-दिव्यज्योतिश्छटाभिः।

सुधाकण्ठः। अहो मधुरम्। ततश्च किं वृत्तमिति कथ्यताम्।

सनातनः। तदाहि अविरामं समुत्तिष्ठति दूरान्तेभ्यो मधुरकम्बुनादललितः प्रणवध्वनिर्येन मुखरितमभूत् निस्तब्धं दिङ्मण्डलमलौकिक-शुभ-नादेन। अद्यापि तत्सङ्गीततरङ्गो ध्वनति मम श्रुतिपटेषु। न हि विस्मरामि चैनम्।

रत्नमञ्जरी-सनातनौ। अहो सुखम्! ततश्च?

सनातनः। ततश्च प्रणतोऽहं ध्यानमग्नो देवीं वरदानाय समाराधयम्। ध्यानभङ्गे त्वपश्यम्—सा देवी अङ्गुलिनिर्द्देशेन मह्यमभयं दत्वान्तरालं गच्छति। ततोऽहं गुरुणा बहिरानीतः। अपश्यञ्चा-भिनवचित्रकल्पं विश्वस्य सौन्दर्य्यम्। तदा हि जागर्त्ति विश्वचराचरम्। आविर्भूता मे नयनपुरतो निर्झर-मालिनी काननकुञ्जमेखला नवदूर्व्वादलश्यामलेयं कुसुमाम्बरा

वसुन्धरा। कनकांशुकिरीटिनी नीलाम्बुधौतचरणतला सेयं नवरूपा कनकरत्नशस्यनिकरैस्तदा हसति स्म।

सुधाकरः। अहो, ध्यानचित्रमेतन्मे चिरसम्पूजित—मातृरूपं भगवत्या कृपया ते प्रदर्शितम्। एषा हि, सिद्ध योगि-मुनि-तापस-ध्यान-विलसिता तुषाराचलमौलिकिरीटिनी कनकरत्नमालिनी मातृमूर्त्ति र्या खलु अमृतकल्पैः फलशस्यान्नजातैर्विश्वजनान् पालयति, धारयति च स्नेहभराच्चन्दनसुशीतले विशाले वक्षसि तनयान्। धन्योऽसि वीर, त्वं मातृदर्शनेन!

सनातनः। अथ किम्। एषा हि नः प्राणाः,—एषास्माकं शरणम्। तदेनां वयमाराधयामः। वन्दामहे मातरम्। वन्दे मातरम्।

रत्नमञ्जरी (युक्तकरा)। वन्दे मातरम्। देवी खलु जागर्त्ति। जाग्रति हिमाचलाः। (उभावुद्दिश्य) तद्वीराः, प्रचारयत मातृ-महिमानं जागरणाय ग्राहग्रस्तनाम्। सिद्धमस्तु तपस्विनां कृच्छ्रसाधनं मातृपूजनेन।

सनातनः। साधु साधु। प्रणमामो मातरम्। तस्या मङ्गलमये चरण-कमले समर्पितमस्तु अस्माकं जीवनम्।

सर्व्वे। वन्दे मातरम्। वन्दे मातरम्।

गानम्

रत्नमञ्जरी (गायति)। नभसि अरुणरेखापुरो ज्वलति अंशुमाला,
लसति दिग्वधूकरे कनककमलमाला।
श्यामधरणीतले
नीलसरसीजले
हसति रक्तपद्मराजिश्चलति नैशवेला॥
गायति मौन-पुण्यगीतिं मङ्गलजयवीणा,
त्यागदीप्तहोमवह्नि र्ज्वलति मृत्युहीना

कोऽस्ति कुत्र, एहि वीर जाग्रति देवबालाः,
शोभते मातृचरणपद्मे रक्तकमलमाला ॥

इति षष्ठेऽङ्के तृतीयं दृश्यम् ।

सप्तमोऽङ्कः—प्रथमं दृश्यम्

( देवस्थाने वेदभारती-मन्दिराङ्गनम् प्रविशति रिक्तपुष्पभाजना रत्नमञ्जरी ।

रत्नमञ्जरी (स्वागतम्) । देवी लक्षपद्मोपहारमिच्छति । किन्तु महत्या चेष्टयापि न मया कमलमासादितम् । आश्चर्य्यम् ! पुरोद्याने सरसीजलेषु प्रतिदिनमजस्रकमलानि स्वर्णकरैर्हसन्ति । अद्य तु नैकमपि दृश्यते । यातु—राज्ञे निवेदयामि ।

(उपसृत्य मन्दिरं गत्वा) अये ! सपत्नीको महाराजोऽत्र प्रतीक्षते ।
[ पटीपरिवर्त्तनम्—दृश्यते भगवत्या वेदिकायाः पुरतः समासीनः सपत्नीको विजयकेतुः—उभौ मुद्रितनेत्रौ ध्यायतः । ]

उपसृत्य रत्नमञ्जरी । जयोऽस्तु नरपालस्य । ( राज्ञीं प्रति ) देवि, एषाहमागच्छामि ।

मधुच्छन्दा (नयनयुगमुन्मील्य) । आनयसि भद्रे कुसुमसम्भारम् ? स्थापयात्र स्वर्णपात्रे पूजोपहारम् । (स्वर्णपात्रमग्रे निर्द्दिशति । )

विजयकेतुः । अर्प्यतामयि पद्मनिकरः । अहो, कथं रिक्तं ते पुष्पभाजनम् ?

रत्नमञ्जरी । देव, क्षम्यतामपराधः । अकृतकार्य्याहमागच्छामि ।

मधुच्छन्दा । किं कथयसि ? किं तत्र समाहृतमर्च्चनायै पुष्पजातम् ?

रत्नमञ्जरी । श्रूयतामत्र भवत्या । ( राजानं प्रति ) आकर्णयतु देवः ।

मधुच्छन्दा । उच्यतामविलम्बेन, को हि प्रतिबन्धः समायाति ?

रत्नमञ्जरी। देवि, आरक्तकमलहासैः प्रत्यहं हसन्ति सरसीनीराणि। अद्य तावदेकमपि न दृश्यते पद्मम्। विलोपं गच्छन्ति च पुष्पमुकुलानि। तेन शून्या मरुस्थलीव आभान्ति सरसीसलिलानि।

विजयकेतुः (विस्मितः)। आश्चर्य्यम्! किं मायामरीचिकेयं, यत् कुसुमाम्बरा विश्वप्रकृतिरस्माकं नैराश्याय सम्पदमपहरति? अथवा किं मायेयं दैवतानाम्?

मधुच्छन्दा (निःश्वस्य सविषादम्)। दुर्भाग्यं प्रजानाम्! नूनं विश्वमाता प्रकुपिता छलयति तनयान्। एतन्निश्चितम् अशुभाय भवति।

विजयकेतुः (सोच्छ्वासम्)। अकरुणं हन्त नियतेर्विधानम्! (राज्ञीं प्रति) देवि, मा विषीद। अस्ति राजकोषे सञ्चितं विपुलं कनकजातम्। तेनैव रत्नमण्डितानि स्वर्णपद्मानि निर्माय्य भगवतीमर्च्चयिष्यामि।

रत्नमञ्जरी (राज्ञीं प्रति)। देवि, स्थाने खलु महाराजस्योपदेशः। तद् आदिशतु देवी परिजनान्। ते हि शिल्पिनां सकाशं गत्वा विज्ञापयिष्यन्ति महादेव्या मनोरथम्।

मधुच्छन्दा (समुत्थाय)। आनीयन्तामयि तन्मम रत्नाभरणानि। कनकसम्भारेण लक्षपद्मानि कारयित्वा अर्पयिष्यामि भगवत्यै करुणालाभाय।

(प्रविशति सनातनः)

प्रविश्य सनातनः। कथं व्यर्थं भवेच्छुभसङ्कल्पितम्? देवि, न हि मातृपूजा उपचाराभावाद् विफला भविष्यति।

विजयकेतुः (सहर्षम्)। आगच्छ बन्धो। सफलीकुरु अस्मद्व्रतम् सङ्कल्पस्य साफल्यविधानेन।

मधुच्छन्दा ( सनातनं प्रति )। महाप्राण ! राज्यस्य कल्याणार्थं जगन्माता लक्षपद्मोपहारमिच्छति। तदहं स्वप्ने समादिष्टास्मि। अतो मे व्रतसाधने साहाय्यं विधीयतामानुकूल्येन।

सनातनः। अलमुद्वेगेन देवि। विश्वमातुरादेशो न कथमपि व्यर्थो भवेत्।

विजयकेतुः। साधु साधु वीर। एतत्त्वयैव साध्यं भवेत्।

सनातनः। धन्योऽहं शुभनियोगेन। तन्महाराज, प्रतीक्ष्यतां तावद् यावदहं कृतकृत्यः प्रत्यागच्छामि।

मधुच्छन्दा। किन्तु भद्र, सहचर्य्यो मे चेष्टमाना अपि सरांसि शून्यानि पश्यन्ति। नहि लभ्यन्ते पूजनार्थमुत्पलानि।

सनातनः। प्रजामातः, अलं चिन्तया। समन्ततोऽहं राज्येषु विचरिष्यामि आनेष्यामि ततः पूजोपहारम्।

विजयकेतुः। प्रिय, त्वर्य्यतां मनोरथसाधनाय। पूर्य्यतां मनोवाञ्छितम्।

सनातनः। तथास्तु। एषोऽहं गच्छामि। ( प्रस्थानोद्यतः )

( प्रविशति राजकविः सुधाकण्ठः।
सनातनो गमनाद् विरमति। )

प्रविश्य सुधाकण्ठः। असारे खलु संसारे शुभदं राजदर्शनम्। एषोऽहं पुण्यकर्म्मनिरतं महाराजं पश्यामि। जयोऽस्तु महादेव्या, महाराजस्य च। विजयतां च वीरः सनातनः।

सनातनो विजयकेतुश्च ( सहर्षम् )। स्वागतं कविवर्य्यस्य। प्रतिपालयामि तव शुभागमनम्।

सुधाकण्ठः। धन्योऽस्मि महाजनप्रसादेन।

सनातनः। विजयतां कविवरः। बन्धो, उपस्थितं साम्प्रतं नूतनं कृत्यजातम्।

सुधाकण्ठः। धन्योऽस्मि। तत् कथ्यतां भवद्भिः कोऽधुना मयि नियोग इति।

सनातनः ( स्वगतम् )। अहो, सुखदं काव्यसेवनम्। ( सुधाकण्ठं प्रति ) कविवर, किं शतदलं प्रस्फोटयितुं शक्नोषि ?

विजयकेतुः। सखे, एष कविः कल्पनासरसि विहरन् कविताशतदलं विकाशयति। तत् कथमेष मर्त्त्यकृत्यं साधयिष्यति ?

सुधाकण्ठः। किमुच्यतेऽत्रभवद्भिः ? महाराज, कथ्यतां हृद्गतोऽभिलाषः।

सनातनः। महाकवे, जगज्जनन्या अर्च्चनार्थं महाराजोऽत्र लक्षकमलानि अभिलषति। तदत्रास्माकं सहायो भव।

सुधाकण्ठः ( विहस्य )। धीमन्, अहं खलु काव्यामृतविलासी दीनः सारस्वतसेवकः। तेन केवलमहं वाणीप्रसादात् कविता—कमलं रचयित्वा भगवत्यै उपहरामि।

विजयकेतुः। तथास्तु तथास्तु। विरचय कवे मातृवन्दनार्थं मधुमयसङ्गीतानि। तान्येव मम देवीपूजार्थमुपचारा भवन्तु। तेनैव जागरिष्यति देवलोको वरदानाय।

सुधाकण्ठः। किन्तु राजन्, अद्यापि मूढ़ानां न भवति मोहनिद्रावसानम्। तेन देवता न प्रसीदति।

विजयकेतुः। अतः खलु प्रयोजनं तव सङ्गीतकेन। सुप्तानां जागरणं देवानाञ्च प्रबोधनम्, एतत् तवैव करणीयम्।

सुधाकण्ठः ( भावविह्वलः )। अहो, कदा नु जागरिष्यन्ति देवताः ? एषामचेतनानां च जनानां को हि करिष्यति प्रबोधनम् ?

विजयकेतुः। विरच्यन्तां कविवर, नवनवच्छन्दोग्रथितानि मङ्गलगीतकानि समुद्बोधनाय शुभोत्सवस्य। निनाद्यतां तवामृतमयी मधुवीणा निखिलानां सञ्जीवनाय।

सनातनः। अहो पाषाणा जाग्रतु, विगलन्तु हिमाचलप्राणाः। मङ्गलगीतिप्रसादिता जगन्माता सर्व्वान् सञ्जीवयतु करुणादानेन। ( कविं प्रति ) तच्च, कवे, समागतोऽयं शुभलग्नः। वादय ते

मङ्गलशङ्खम्। प्रचारय विश्वमातुर्वन्दनागीतं तवामरकाव्य-घोषेण। अहमपि पूजोपहारसमाहरणाय गच्छामि।

(प्रस्थानं करोति)

विजयकेतुः। वन्दे मातरम्।

सुधाकण्ठः। वन्दे मातरम्।

इति सप्तमेऽङ्के प्रथमं दृश्यम्।

## द्वितीयं दृश्यम्

### अरुणाचलदुर्गप्राङ्गणम्

[रत्नमञ्जरीपरिचालिता देशरक्षिण्यः सैनिकाश्च दण्डायमाना दुर्गपताका-मभिवादयन्ते। गायन्ति गानं देशरक्षिकाः।]

॥ गीतम् ॥

अरुणाचलकेतन जयगौरवनिकेतन,
वन्दे त्वामरुणरागरञ्जित-चिरयौवन ॥
जागृहि मौन, ध्यान-
समाहित-महाप्राण
देहि नोऽभयं मङ्गलालय दुर्जयरिपुकारण,—
लसतु तव महिमा
जयतु वीरगरिमा
असीमव्योम्नि विराज चिर-दुःखतिमिरनाशन ॥
मृत्युञ्जय जय हे
अमृतालय जय हे
देहि नो जयं मङ्गलतपः प्रसादपुण्यपावन।
उद्यतामल-हिमाचल योगीश जयकेतन ॥

[पार्श्वयोर्यथाक्रमं सर्व्वे तिष्ठन्ति]

उपसृत्य सेनापति पुरञ्जयः। इयं हि: नभोमण्डलचुम्बिनी देवस्थानपताका अम्लानदीप्तिगरिम्णा दुर्गशीर्षे विराजते। तद् अभिवादयामि एनाम्। ( पताकामुपलक्ष्याभिवादनं करोति )

सहदेहरक्षिकाः सैनिकाः। वन्दे मातरम्। वन्दे जयपताकाम् ( वन्दन्ते )।

पुरञ्जयः। जयतु जन्मभूमिः।

सर्व्वे। जयतु जननी जन्मभूमिः।

पुरञ्जयः। ( वीरानुद्दिश्य ) विजयन्तां वीराः। जयन्तु देशरक्षिण्यः। भो भो देशसेवकाः, गिरिकुञ्जमालिनी सरिन्मनोहरेयं हिमगिरिकिरीटिनी जन्मभूमिरस्माकं पितृपितामहादीनां जननी प्रसूतिश्च मातृमातामहानाम्। तदेषा चिरं वन्दनीया रक्षणीया च वीर्य्येण।

देशरक्षिण्यः। वयं जन्मभूमिं रक्षामः। प्रणमामो। देशमातरम्।

सैनिकाः। मातरमाराधयामः। जन्मभूमिं रक्षामः।

सेनापतिः। हे वीराः, व्रतचारिण्यश्च, विजयलक्ष्मीर्वीरमेवाश्रयते। श्रीः संवर्द्धयति वीरान् जयमाल्येन। अतः स्वदेशस्य जयलाभार्थमात्मोत्सर्गः करणीयः।

सैनिका देशरक्षिकाश्च। वयं स्वदेशं रक्षिष्यामः। शत्रूंश्च निपातयामः।

( शस्त्राण्युत्तोल्य प्रतिज्ञां कुर्व्वन्ति )

सेनापतिः। साधु साधु वीराः, विजयध्वं मातरश्च।

( प्रविशति ससैन्ये गन्धर्व्वराजश्चित्रभानुः )

प्रविश्य चित्रभानुः। जयन्तु जयन्तु वीराः! एषोऽहं युष्माकं साहाय्यार्थमागतः।

सैनिकाः । जयतु गन्धर्व्वनाथः । जयोऽस्तु महाप्राणस्य ! ( संवर्द्धयन्ति )

पुरञ्जयः । ( उपसृत्य ) विजयतां गन्धर्व्वपतिः । ( संवर्द्धयति ) भवतोऽतुलनीयमहत्त्वेन कृतार्थाः वयम् । अतः सवहुमानं स्वागतं भवद्भ्यो ज्ञापयामि ।

चित्रभानुः । विजयध्वं वीराः । सेनाधिनायक, युष्मदानुकूल्यार्थं ममायमुद्योगः । नूनं देवस्थानस्य जयगौरवार्थं चिरशुभार्थिना मया समरानुकूल्यं कर्त्तव्यम् । तेनाद्यप्रभृति दुर्धषा मम सैनिका युष्मदर्थे आत्तशस्त्रा शत्रुभ्यः प्रत्याघातं प्रदास्यन्ति ।

पुरञ्जयः । ( सहर्षम् ) धन्या वयं भवतामौदार्य्येण । तद् विज्ञापयामि गन्धर्व्वेश्वराय श्रद्धाञ्जलिम् ।

चित्रभानुः । अलं वाहुल्येन । एते हि रणदुर्म्मदा गन्धर्व्ववीराः शत्रुविताड़नेऽरातीनामुत्सादने च सुनिपुणा भवतां सहायभूता योत्स्यन्ते ।

( प्रविशति चरः )

प्रविश्य चरः । ( अभिवादनपूर्व्वकम् ) विजयतां सेनाधीशः ।

पुरञ्जयः । का वार्त्ता चर ?

चरः । सेनापाल, अगणिताः शत्रुसैनिकाः पूर्व्वतः पश्चिमतश्च सीमान्तेभ्यः समवेता राज्यमाक्रामन्ति । ते हि विशालपुरसैनिकैः सार्द्धं सम्मिल्य समन्ताद् अग्रे सरन्ति ।

पुरञ्जयः । ( स्वगतम् ) अहो, अकृतज्ञा गिरिकूटाधिपतयः ! ते हि पूर्व्वमस्माभिः कपटमैत्रीं स्थापयित्वाधुना प्रतिकूल्यमाचरन्ति ।

चित्रभानुः । धिग् धिक् ! निन्दनीयं खलु मित्रद्रोहिणामाचरणम् । दुर्म्मदाश्चैते कुटिलबुद्धिप्रणोदिता वीरधर्म्मं त्यजन्ति ।

सेनापतिः । अथ किम् ! स्वार्थान्धा हिंसालोभप्रमत्ता एते भूपतयो मानवानामशान्तिमुत्पादयन्ति । धिगस्तु एषां दुःशीलताम् !

चित्रभानुः । विनश्यन्तु दुर्म्मतयः । यातु । सेनापाल, साम्प्रतमस्माभिः

कालक्षेपो न हि करणीयः। तत् सपदि अभिद्रुत्य शत्रवः प्रचण्डविक्रमेणाक्रन्तव्याः।

[ दूरतो गर्ज्जति आग्नेयास्त्रनिकरो वज्ररवेण ]

पुरञ्जयः। (सैनिकान् प्रति) भो भो, नास्त्यतोऽवसरः। तत् तूर्णमभिधावत शत्रुनाशाय। रक्षत जन्मभूमिम्।

सैनिकाः। जयतु जन्मभूमिः। जयतु जन्मभूमिः।

चित्रभानुः। निपातयत शत्रून्। विताड़यत विताड़यत अरीन्।

सैनिकाः। वन्दे मातरम्। संहारः। संहारः।

(प्रचण्डकोलाहलेन सैनिका जययात्रां कुर्व्वन्ति)

पुरञ्जयः। (देशरक्षिकाः प्रति) यूयमपि कल्याण्यः पुरमध्ये यथास्थानमधिष्ठाय पुररक्षार्थं शान्तिविधानं करणीयम्।

रत्नमञ्जरी। जयतु सेनापालः। एषोऽहं सहदेशरक्षिका स्वनियोगमनुपालयामि। (देशसेविकाभिः सह प्रस्थानं करोति)

पुरञ्जयः। (गन्धर्व्वराजं प्रति) आगच्छतु गन्धर्व्वपालः! उभावेव आवाम् रणाङ्गनस्य पुरोभागमुपगम्य यथोपयुक्तां प्रतिरोधव्यवस्थामायोजयामः।

चित्रभानुः। जयतु वीरः। साधयामः स्वकर्त्तव्यं नीतिप्रयोगेन।

(उभौ प्रस्थानं कुरुतः)

[ नेपथ्ये रणकोलाहलः—मुहुर्मुहुराग्नेयास्त्रवर्षणध्वनिः ]

इति सप्तमेऽङ्के द्वितीयं दृश्यम्।

## तृतीयं दृश्यम्

[ वेदभारती मन्दिरम्—देव्यग्रे धूपदीपा ज्वलन्ति—प्रशस्तस्वर्णपात्रे स्वर्णपद्मानि शोभन्ते—विराजते च देवीपीठोपरि कुङ्कुमाङ्कितो विजयखड्गः—रत्नमञ्जरीसहिता मधुच्छन्दा कृताञ्जलिः पुरत उपविशति—सख्यौ भगवतीमुद्दिश्य चामरैर्वीजनं विधत्तः—आसने समासीनश्च विजयकेतुर्मुद्रितनेत्रो ध्यायति

—रत्नमञ्जरी वन्दनागीतं गायति ।

॥ गीतम् ॥

नमो नमो विश्वजननि,
मनोमन्दिरविहारिणि ।
हृदये हृदये राजसे अयि कुसुमकुञ्जचारिणि ॥
पृथ्वी आनन्दलीना
ध्वनति मधुवीणा
जागृहि देवि जीवनदयिनि मानसतमोनाशिनि ॥
गृहाण भक्तिकमलमर्घ्यं हृदयकमलवासिनि,
प्रणतजनपालिनि, दुःखतिमिरनाशिनि
जय विश्वभुवननन्दिनि ॥

( सर्व्वे प्रणमन्ति )

मधुच्छन्दा । ( नयने उन्मील्य ) कृताञ्जलिः—भगवती विश्वजननी, गृहाण स्वर्णपद्मोपहारम् । प्रसीद देवि भक्त्यर्घ्यग्रहणेन । ( स्वर्णपद्म-गुच्छमर्पयति )

विजयकेतुः । ( ध्यानाविष्टः ) नमस्ते जगदम्बिके । देवि, गृहाण कनकाञ्जलिं स्वर्णपद्मानुकल्पेन । पूरय सन्तानानां सङ्कल्पमभीष्टसाधनाय । ( स्वर्णपद्मैरञ्जलिं निवेदयति )

प्रविश्य सनातनः । अहमेव सङ्कल्पं साधयामि । ( राजानं प्रति ) राजन् । देवीमहमाराधयामि । ( युक्तकर उपविशति )

विक्रमकेतुः । ( ससम्भ्रममुत्थाय ) सनातन सनातन, पूरय शुभव्रतं लक्ष-पद्मोपचारेण ।

सनातनः । राजन् ! देवस्थाने लक्षप्रजा निवसन्ति । किञ्च नाधुना सम्भवति लक्षपद्मानां समाहारः । तत्तेषां हृदयोत्पलप्रकल्पेन पूजयिष्यामि मातरं श्रेष्ठोपहारेण ।

मधुच्छन्दा । ( सविषादम् ) अहो, न भवति सङ्कल्पसाधनम् ।

विजयकेतुः। अशुभकरो हन्त व्रतभङ्गः।

सनातनः। नैवम्। कथं व्रतभङ्गो भविष्यति? राजन्! प्रजानां मङ्गलार्थं लक्षहृदयोत्पलप्रकल्पमेतन्मे विमलश्रद्धालुरञ्जितं हृत्कमलं प्रेमाश्रुचन्दनजलेन सुरभीकृत्य विश्वदेव्यै निवेदयामि।

मधुच्छन्दा। जननि विश्वाम्बिके, क्षमस्वापराधम्। गृह्यतामात्मनिवेदनं भगवति!

रत्नमञ्जरी। प्रसीद जगज्जननि।

विजयकेतुः। देवि, लीलया सृजसि, अपहरसि च लीलया सर्वं पलकेन। तत्क्षम्यतां व्रतभङ्गापराधः सन्तानानामश्रुकमलपरिग्रहणेन।

सनातनः। (उन्मीलितनेत्रो दृप्तकण्ठेन) राजन्, सङ्कल्पमहं साधयामि। (राज्ञीं प्रति) देवि, नाहं मातृपूजां विफलतां नयामि। गुरुणा सिद्धतापसेनाहं मातृचरणार्च्चने दीक्षितः। तत् पूरयिष्यामि पुण्यव्रतं मातुरुपचारप्रदानेन। (कृताञ्जलिर्योगासनस्थोध्यायति) (क्षणात् परं ध्यानमुक्तो भगवतीं प्रति) देवि भगवति विश्वजननि, प्रसीद। लक्षजनानां हृदयानुरागरञ्जितं पद्मोपहारप्रकल्पम् हृत्कमलं तुभ्यमहं निवेदयामि। सफलय देवि, सन्तानगणमङ्गलार्थमात्मनिवेदनं राज्ञ्याः सङ्कल्पपूरणाय।

[ स्थिरयोगासनो ध्यात्वा प्रणतमौलिर्मौनं तिष्ठति—विरतः श्वासस्पन्दः —प्राणा गच्छन्ति—महासमाधिः प्रकटते। ]

विजयकेतुः। (उत्थायाभिलक्ष्य) उत्तिष्ठ सनातन। त्यज ध्यानम्। उत्तिष्ठ। (नास्ति प्रत्युत्तरः)

मधुच्छन्दा। जय वीर। मातृपूजा ते सिद्धिं गच्छति।

विजयकेतुः। (सन्त्रासव्याकुलः) अलमलं कृच्छ्रसाधनेन वत्स। उत्तिष्ठ योगासनात् (सनातनस्याङ्गं चालयति। तत्तु निश्चलं तिष्ठति —राजा सनातनस्य निष्पन्दकलेवरं नासिकादिकं करस्पर्शेन निश्चलं निरीक्ष्यत् स्वगतं विस्मयविह्वलः किं न्वेतत्? नैष

वचनमुदीरयति ! सनातन, वीर सनातन ! ( सविषादं करुणं विलपति ) उत्तिष्ठ सनातन !

[ रत्नमञ्जरीसहिता मधुच्छन्दा उपसृत्य सनातनस्य प्राणहीनवक्षोदेशं स्पृशति ]

उभे । ( सकरुणमुच्चैः ) वीर, वीर ! उन्मीलय नेत्रयुगलम् ।

मधुच्छन्दा । उत्तिष्ठ योगासनाद् वीर ! किमिदमहो संवृत्तम् ? किमिदम् ! नैष उत्तरं ददाति !

( प्रविशति सुधाकण्ठः )

सुधाकण्ठः । ( सखेदम् ) एष जन्मभूमेः कल्याणार्थं देवीपदे हृत्पद्ममर्पयति, महासाधकः । राजन्, एष वीरः व्रतसाधनार्थमात्मानमुत्सृजति ।

[ मधुच्छन्दा वीरस्य मस्तकमङ्के कृत्वोपविशति—सविषादमालोकयति च रत्नमञ्जरी ]

मधुच्छन्दा । ( सखेदम् ) हा हा वीर, महाप्राण ! अमृतलोकं गच्छसि त्वम् ! प्राप्नुहि तद् आनन्दमयं शाश्वतशान्तिसौख्यं मातृपदसमाश्रयेण ।

सखीद्वयसहिता रत्नमञ्जरी । अहो दुःखम् ! (करुणं विलपति) अहो दुःखम् ।

विजयकेतुः । ( विषादविह्वलः ) एषा विश्वमाता नयति करुणाभरेण स्नेहशीतलं स्वकीयाङ्कदेशं प्रिय सन्तानम् ! ( सनातनमुद्दिश्य ) हे महावीर, गच्छसि त्वममृतलोकं चिराय ? अहो—वीर मृत्युञ्जयस्त्वमेव सर्व्वं हलाहलं निपीय देशहितायात्मानमुत्सृजसि । तद् वन्धुविरहितः कथमेकाकी मातृपूजामहं समापयामि ? ( विषादं करोति )

( प्रविशति ब्रह्मानन्दः )

ब्रह्मानन्दः । ( राजानं प्रति ) राजन्, विरम विरम शोकात् । नहि वीरः शोचति । ( मधुच्छन्दां प्रति ) देवि, परिहर शोकम् । अमृतलोकादवतीर्ण एष महासाधको महायज्ञं समुद्याप्य आनन्दलोकं गच्छति । ( सर्व्वानुद्दिश्य ) अतः सर्व्वेऽधुना महाप्रेमिकं वीरं सनातनं कुसुमनिर्म्माल्यैर्भूषयत ।

[ सखीगणसहिता रत्नमञ्जरी समुपसृत्य देव्या निर्म्माल्यैः सनातनस्य मृतदेहं भूषयति । ]

द्रुतमभिगम्य विजयकेतुः । नहि नहि । अहमेवार्च्चयिष्यामि बन्धुम् । आनीयन्तां भो देवी पादपीठात् स्वर्णपद्मानि । अहमेव महाप्राणं वीरोत्तमं भूषयिष्यामि ।

[ सख्यौ स्वर्णोत्पलान्यानीय राजहस्ते यच्छतः, राजा च सनातनस्याङ्गेषु स्थापयति पद्मानि । मधुच्छन्दा च मृतस्य ललाटे कुङ्कुमचन्दनं ददाति । ]

सुधाकण्ठः । (सोच्छ्वासम्) नहि नहि । अहमेव वीरं संवर्द्धयिष्यामि । (उपसृत्य) भो, दीयन्तां मे पुष्पस्तवकानि स्वर्गतमहावीरस्य सम्माननाय । (करौ प्रसारयति, नारीणां हस्तात् परिगृह्य कुसुमान्यर्पयति वीरदेहेषु)

विजयकेतुः । (कविं प्रति) विरचय कविवर, अमृतस्यन्दिगीतिशतदलं महासाधकस्यार्च्चनाय । प्रचारय वीरस्य मङ्गलजयोद्गीतिमुच्चैर्वीणानादेन ।

सुधाकण्ठः । (विषादस्खलितकण्ठः) गच्छ गच्छ वीर, त्वमानन्दलोकम् । जीव त्वं स्मृतिभास्वरः शाश्वतकालं जनचित्तेषु अम्लानकीर्त्तिविभवेन । जयोऽस्तु महाप्राणस्य ।

सर्व्वे । विजयतां महासाधकः सनातनः ।

विजयकेतुः । (सखेदम्) अहो, को हि पुनरशरणान् शरणं प्रापयति, प्रसान्त्वयिष्यति च व्यथितान्? एष निखिलां देवनां हृदये सन्धार्य्य जन्मभूमेर्गौरवरक्षार्थमात्माहुतिं ददाति ।

सुधाकण्ठः । जयति वीर सनातनः । जयतु महावीरः ।

विजयकेतुः । (सोच्छ्वासमुच्चैः) अये भो, आनीयतां देवीपीठान्मे मातृचरणस्पर्शपूतः कुङ्कुमचन्दनानुरञ्जितो विजयखड्गः । अधुनैवाहमरातिनाशाय जययात्रां करिष्यामि ।

( प्रविशति सानुचरः सेनापतिः पुरञ्जयः )

पुरञ्जयः । विरमतु विरमतु नरपालः । एषोऽहं जयवार्त्तामानयामि ।

सुधाकण्ठः । ( सोल्लासम् ) जयति विश्वमाता । विश्वदेवी प्रसीदतु ।

पुरञ्जयः । ( राजानमुद्दिश्य ) आकर्णयन्तु अत्रभवन्तः । प्रवलप्रतिरोधेन प्रतिहता नोऽरातयः । दूरं विताड़ितास्ते हतगौरवा स्वराज्यं प्रतिनिवर्त्तन्ते ।

मधुच्छन्दा । ( उच्चैः ) देवी प्रसीदति ? ( देवीमुद्दिश्य ) अयि अकरुणे सुमङ्गले ?

विजयकेतुः । अहो, किं तद् देवी प्रसीदति प्रियपुत्रग्रहणेन ? जाग्रति किमतो योगसुप्ता निखिलदेवा मर्त्यानामाकुलक्रन्दनेन ?

ब्रह्मानन्दः । अथ किम् ! सुप्तोत्थितोऽधुना देवगणः । जागर्त्ति हिमाचलः । भो भोः, ध्यानं त्यजन्ति साम्प्रतं देवाः । तेन स्पन्दन्ते पाषाणा विगलन्ति सुधानिर्झराः । भो साधकाः, अर्च्चयत जननीं वसुन्धरां प्रेमपुष्पेण ।

सुधाकण्ठः । अहो, अतुलनीयमेतदात्मदानं देशहिताय । तत् सार्थकमस्तु सनातनस्यात्मनिवेदनं सर्व्वद्वन्द्वमोहकलुषाणां नाशाय । ( राजानमुद्दिश्य ) कथं विषादो राजन् ? ननु सङ्कल्पितं त्वयैकदा खिन्नात्मना समर्पयितुं राजमुकुटं वीरसनातनाय । तद् आत्मदानमाहात्म्येनैष विजयमाल्यालङ्कृतोऽमरलोके-देदीप्यते सनातनः सर्व्वेषां मङ्गलाय ।

विजयकेतुः । ( सोच्छ्वासम् ) कवे, हर्षविषादाभ्यामभिभूतं मे हृदयम् । ( राज्ञीं प्रति ) देवि, आनीयतां मम रत्नमुकुटं वीरसंवर्द्धनाय । प्रज्वाल्यन्तां च समन्ततो मङ्गलदीपाः हर्म्योपवनपथप्रान्तरेषु । क्रियतां च लोकसज्जा सर्व्वत्र नगर्यां वीरसाधकस्य स्मृति-पूजनाय ।

अभ्यन्तरं गत्वा पुनर्निवृत्य मधुच्छन्दा । एषाहं महाप्राणस्य शिरसि रत्न-मुकुटमारोपयामि । ( सनातनस्य शिरसि मकुटं न्यस्यति )

(सनातनमुद्दिश्य) महाप्रेमिक, वीरसाधक, विजयतां भवान् शाश्वतकालाय।

सर्व्वे। जयति वीरसाधकः—विजयते महाप्राणः सनातनः।

(सर्व्वे वीरोद्देशेन श्रद्धां निवेदयन्ति)

विजयकेतुः। अस्यां सम्मिलिताश्रुमन्दाकिन्यामवगाह्य सर्व्वेऽद्य महावीरं तर्पयामः (सर्व्वे सनातनस्य जयघोषं कुर्व्वन्ति)

मधुच्छन्दा। नादय मङ्गलशङ्खम्। गाहि कवे जयगानं वीरस्य। (शङ्खा ध्वनन्ति)

ब्रह्मानन्दः। तथास्तु। कुरुत विजयोत्सवमानन्देन। उड्डायय च सगौरवम् जयकेतनानि देवस्थाननिलयेषु। किञ्चेयं शङ्खचक्रपद्मलाञ्छना कुङ्कुमारुणा जयपताकोड्डीयमाना चिरं महाप्राणसनातनस्याम्लान-कीर्त्तिमाहात्म्यं प्रचारयतु। (पताकामर्पयति, राज्ञी च गृह्णाति स्वहस्तेन) (राजानमुद्दिश्य) तद् राजन्, कथ्यतां किं ते पुनरुपकरोमि ?

(सर्व्वे कृताञ्जलयस्तिष्ठन्ति)

विजयकेतुः। ब्रह्मन्, किमहं कथयामि ? विह्वलोऽस्मि हर्षविषादेन। तथापि सार्थकोऽस्तु वीरसनातनस्यात्मोत्सर्गो भवतामाशीर्व्वादेन। (प्रणमति)

सुधाकण्ठः। (सोल्लासमुच्चैः) अहो सुखम्! सर्व्वेऽद्य वीरस्य जयगानं प्रकुर्व्वन्तु। (राज्ञीं प्रति) देवि, मुञ्च शोकम्। न हि वीरस्यात्मदानं व्यर्थतां गच्छति। (राजानं प्रति) किञ्च राजन्, दृश्यतामिह,—सुप्रोत्थिता वसुन्धरा जागर्त्ति। तेन सुखस्पन्दमधुरा विश्वप्रकृतिः कमनीय-सुषमासमारोहेणाच्चर्चयति प्राणदेवतां प्रेममन्त्रेण।

ब्रह्मानन्दः। मधुरं मधुरम्! विलसति चायं नीलाम्बरतलेषु कनककिरण-रञ्जितस्तुषारमौलिर्हिमाचलः। आमन्त्रयते च निखिलं कुसुमालङ्कृता नवगन्धामोदिता धरित्री महामिलनाय। तदद्य

ध्यानं त्यक्ते निखिलदेवलोके, जाग्रति च हिमाचले सर्व्वेऽत्र
प्रेमभरेण प्रणमत विश्वमातरम्।

[ सर्व्वे मिलितकण्ठस्वरेण ]—वन्दे मातरम्। वन्दे मातरम् ( शङ्खा ध्वनन्ति )

[ नेपथ्ये कापि गायति मन्त्रमुदात्तस्वरेण ]

नेपथ्ये गीतम्

अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम्
तां मा देवा व्यदधुः पुरत्रा
भूरिस्थात्रां भूर्य्यावेशयन्तीम्॥

( प्रविश्य देहरक्षिकाः कुर्व्वन्ति मातृवन्दनम् )

देवीवन्दना

राष्ट्रेश्वरि राजलक्ष्मि कनकरत्नदायिनि,
ब्रह्ममयि चात्मशक्तिस्त्वं हि चितिरूपिणी।
यज्ञभागभुजामाद्ये विश्वमूर्त्तिधारिणि।
चिन्मयि त्वं पराशक्तिर्हृदयपद्मवासिनी।
विश्वेश्वरि जननि जय विश्वभुवनपालिनि,
जन्मभूमे जननि जय नमस्ते देशरूपिणि
जननि जय जननि जय नमो नमो देशजननि।

इति सप्तमेऽङ्के तृतीयं दृश्यम्

परिसमाप्तमशेषशास्त्राचार्यमहामहाध्यापक-कृष्णकान्तकृतिरत्नात्मज-श्रीविश्वेश्वरविद्याभूषणकाव्यतीर्थेनविरचितं प्रबुद्धहिमाचलं नाम नाटकम्।

ॐ तत्सत्

ॐ ब्रह्मार्पणमस्तु।

—०—

